किञ्चाखिलो विपाकोऽय—मस्ति स्वकृतकर्मणः । दुःखाय नोपसर्गस्त—त्सतां कर्मजिघांसताम् ॥ ३९ ॥
अवश्यं नाशिनो बाह्य—स्याङ्गस्याऽस्य कृते ततः । कोपः कार्यो नान्तरङ्ग—ध्रुवधर्मधनापहः ॥ ४० ॥"
स्कन्दकेनेति निर्याम्य—माना निर्मलमानसाः । महात्मानो विपक्षे च, मित्रे च समदृष्टयः ॥ ४१ ॥
यन्त्रपीडनपीडां तां, क्षममाणाः क्षमाधनाः । केवलं प्राप्य कैवल्य—सुखं ते लेभिरे क्रमात् ! ॥ ४२ ॥ युग्मम्
द्रुतं हतेषु तेनैवं, द्व्युनपञ्चशतर्षिषु । एकं क्षुल्लकमुद्दिश्य, पालकं स्कन्दकोऽवदत् ॥ ४३ ॥
अनुकम्प्यमिमं बालं, पीडयमानम् निरिक्षितुम् । नाहं शक्ष्यामि नियतं, पूर्वं पीडय मां ततः ! ॥ ४४ ॥
तच्छ्रुत्वा पालकस्तस्य, भूरिदुःखविधित्सया । गुरोः पश्यत एव द्राक्, प्राक् तं बालमपीडयत् ! ॥ ४५ ॥
शुक्लध्यानसुधाऽऽसार—शान्तकर्महुताशनः । बालः सोऽपि महासत्त्वो, महानन्दमविन्दत ! ॥ ४६ ॥
तद्वीक्ष्य स्कन्दकाचार्यः, क्रुद्धोऽन्तर्ध्यातवानिति । अनेन सपरीवारः, पापेनाऽस्मि विनाशितः ! ॥ ४७ ॥
क्षुल्लकोऽपि हि मद्वाचा, क्षणमेकं न रक्षितः । निग्राह्य एव पापोऽसौ, तन्मया गर्वपर्वतः ॥ ४८ ॥
अयं भूपोऽपि निग्राह्यो—ऽस्मद्विनाशनिबन्धनम् । उपेक्षाकारिणोऽस्माकं, वध्या जानपदा अपि ! ॥ ४९ ॥
तद्दुष्करस्य चेदस्य, भवेन्मत्तपसः फलम् । तदाहं दाहकोऽमीषां, भूयासं भाविजन्मनि ! ॥५० ॥
इत्थं कृतनिदानः स, पीडितस्तेन दुर्धिया । मृत्वा वह्निकुमारेषु, सुरोऽभूत्परमर्द्धिकः ॥ ५१ ॥
पुरन्दरयशास्तत्र, दिने चैवमचिन्तयत् । कुतो हेतोः पुरीमध्ये न दृश्यन्तेऽद्य साधवः ! ॥ ५२ ॥
इतश्च स्कन्दकमुने—रजोहरणमुत्तमम् । रक्ताभ्यक्तः कर इति, जगृहे गृध्रपक्षिणा ॥ ५३ ॥

तद्रजोहरणं च द्राग्, भवितव्यनियोगतः । पुरः पुरन्दरयशो—देव्या गृध्रो न्यपातयत् ॥ ५४ ॥
तच्चादायोद्वेष्टयन्ती, सा स्वयं परिकर्मितम् । काम्बलं खण्डमद्राक्षी—द्भ्रातुः प्रव्रजतोऽर्पितम् ॥ ५५ ॥
चिह्नेन तेन च ज्ञात्वा, सोदरादीन् मुनीन् हतान् । महतीमधृतिं प्राप्ता, साऽवादीदिति भूपतिम् ॥ ५६ ॥
रे साधुद्विष्ट ! पापिष्ठ !, विनङ्क्ष्यत्यधुना भवान् । महर्षीणां सुराणां च न ह्यवज्ञा शुभावहा ! ॥ ५७ ॥
इत्युदियेति दध्यौ चा—ऽधुनाऽहं व्रतमाददे । अलं संसारवासेना—ऽमुना दुःखौघदायिना ! ॥ ५८ ॥
चिन्तयन्तीति सा देवैः, सुव्रतस्वामिसन्निधौ । नीताऽऽदाय परिव्रज्यां, परलोकमसाधयत् ! ॥ ५९ ॥
ज्ञात्वाऽथाऽवधिना प्राच्यं, स्ववृत्तं स्कन्दकामरः । क्रोधाध्मातो देशयुक्त—मधाक्षीन्मङ्क्षु तत्पुरम् ॥ ६० ॥
ततोऽरण्यमभूद्देश—भूमौ दण्डकिभूपतेः । अद्यापि दण्डकारण्य—मिति तत्प्रोच्यते बुधैः ॥ ६१ ॥

एकोनपञ्चशतसाधुवरैरवार्य—वीर्यैर्यथा वधपरीषह एष सोढः ! ।
सह्यस्तथा यमपरैरपि साधुमुख्यैः, श्रीस्कन्दकश्रमणवन्न पुनर्विधेयम् ॥ ६२ ॥

इति श्रीमुद्रित—उत्तराध्ययनवृत्तितः उद्धृता स्कन्दकाचार्यकथा संपूर्णा.

## ४६ तृणस्पर्शपरीषहे भद्रमहर्षिकथा

श्रावस्तीनगरीभर्तु—र्जितशत्रुमहीपतेः । भद्राभिधोऽभवत्सूनुः, सात्त्विकेषु शिरोमणिः ॥ १ ॥
मुनीनामन्तिके जैनं, धर्मं श्रुत्वा विरक्तधीः । स प्रव्रज्यामुपादत्त, क्रमाच्चाऽभूद्बहुश्रुतः ॥ २ ॥

प्रतिपद्याऽन्यदैकाकि–विहारप्रतिमा व्रती । विजहार धरापीठे–ऽप्रतिबद्धः समीरवत् ॥ ३ ॥
अन्येद्युर्विहरन् सोऽथ, क्वापि राज्यान्तरे गतः । हेरिकोयमिति ज्ञात्वा, जगृहे राजपुरुषैः ॥ ४ ॥
कस्त्वं ? केन चरत्वाय, प्रहितोसीति ? जल्प रे ! । पप्रच्छुरिति तं भूयः, पुरुषाः परुषाः रुषा ॥ ५ ॥
व्रती तु प्रतिमास्थत्वा–न्न किमप्युत्तरं ददौ । ततस्ते कुपिताः क्षार--दानेन तमतक्षयन् ॥ ६ ॥
निशातखड्गवत्तीक्ष्ण--धारैर्दर्भैश्च तं मुनिम् । गाढमावेष्टय मुक्त्वा च, ते दुष्टाः स्वाश्रयं ययुः ॥ ७ ॥
यतेस्तस्याऽमिपं बाढं, समन्तादपि तैः कुशैः । विदग्धस्येव वैदग्ध्यं, दुर्विदग्धैरकृत्यत !॥ ८ ॥
तथापि कलुपं ध्यान--मकुर्वाणः क्षमानिधिः । स सम्यगधिसेहे तं, तृणस्पर्शपरीषहम् ॥ ९ ॥
लग्ना शूकशिखाऽप्यङ्गे--ऽङ्गिनां क्षोभाय जायते । स तु दक्षो न चुक्षोभ, मांसमग्नैः कुशैरपि ! ॥ १० ॥
एवं तृणस्पर्शपरीषहं यथा–ऽधिसोढवान् भद्रमुनिर्महाशयः । तथाऽयमन्यैरपि साधुपुङ्गवै--स्तितिक्षणीयः क्षतमोहवैरिभिः ॥

इति श्रीमुद्रित--उत्तराध्ययनवृत्तितः उद्धृता भद्रमहर्षिकथा संपूर्णा

## ४७ पृथ्वीचन्द्र–गुणसागर–प्रबन्धः गतैकादशो भवः

अथास्ति कोशले देशेऽयोध्या नाम महापुरी । हरिसिंहो नृपस्तत्र, तस्य पद्मावती प्रिया ॥ १ ॥
इतः सर्वार्थतश्च्युत्वा, कुसुमायुधनिर्जरः । विमानस्वप्नतः पद्मावती–कुक्षाववातरत् ॥ २ ॥
पूर्णे काले प्रशस्तेऽह्नि, सुखं प्रासूत सा सुतम् । व्यधात् तस्याभिधां, पृथ्वीचन्द्र इत्यवनीधवः ॥ ३ ॥

क्रमेणाभ्यस्तसद्विद्यो॒ऽ–नवद्यचरितोऽथ सः । अवापत् तरुणीनेत्र–जीवनं यौवनं वयः ॥ ४ ॥
कन्याः षोडश भूपोऽथ, कुमारं पर्यणाययत् । नृसिंहो हरिसिंह–स्तं महामहपुरस्सरम् ॥ ५ ॥
ज्यायसी श्रेयसी तस्य, मातुलस्य सुताऽभवत् । जयदेवस्य ललित–सुन्दरीत्यभिधानतः ॥ ६ ॥
पृथ्वीचन्द्रः पुनर्भोग–विमुखः स्त्रीषु नो रतिम् । मनागप्यभजच्चेति, दध्यौ चेतसि सन्ततम् ॥ ७ ॥
अहो ! पितृभ्यामेषोऽस्मि, रागान्धौ पातितः कथम् ? । यदेता दयिता नैव, मां विमुञ्चन्ति जातुचित् ॥ ८ ॥
कथञ्चित् तदुपायेन, प्रेयसीः प्रतिबोध्य ताः । प्रतिपद्ये परिव्रज्यां, कुर्यां स्वहितमञ्जसा ॥ ९ ॥
ततोऽमुं निर्मितामन्द–धर्मकर्मैच्छमङ्गजम् । मत्वा मोहादश्रुमिश्र–नयनो जनकोऽब्रवीत् ॥ १० ॥
वत्स ! स्वच्छमतेऽस्माकं, तावद् वार्द्धक्यमागतम् । त्वं तु राज्यरमारामासमा–गमपराङ्मुखः ॥ ११ ॥
तद् विचार्य यदत्र स्या–दुचितं कथयाशु तत् । त्वयि राज्यधरेऽप्यापि, यद् वयं राज्यलोलुपाः ॥ १२ ॥
तदेतद्ध्रीकरं लोके, न चायं नः कुलक्रमः । प्राव्रजन् पूर्वजा यन्नः, सर्वे राज्यधरेऽङ्गजे ॥ १३ ॥
तत् स्वीकुरु त्वमात्मीयं, राज्यं मा प्रार्थनां वृथा । कार्पीर्निः स इति श्रुत्वा, तत् पित्रोक्तं तथाऽकरोत् ॥ १४ ॥
ततो निवेशितो राज्ये, पृथ्वीचन्द्रो महामहात् । मोदन्ते स्म जनाः सर्वे, तद्राज्यं वीक्ष्य विस्मिताः ॥ १५ ॥
अथ पृथ्वीमहेन्द्रेऽस्मिन्, पृथ्वीचन्द्रे पृथुद्युतौ । पृथ्वीं शासत्यन्यदेत्य, सुधनाऽऽख्यो वणिग्वरः ॥ १६ ॥
प्राणमत् प्राभृतेनोर्वी–पतिं विरचिताञ्जलिः । तं संमान्य नृपोऽपृच्छ–दाश्चर्यं ब्रूहि किञ्चन ॥ १७ ॥ युग्मम् ॥
सोऽप्याह कुरुदेशेऽस्मि–न्नस्ति हस्तिपुरं पुरम् । पुरप्रधानस्तत्रासी–न्महेभ्यो रत्नसञ्चयः ॥ १८ ॥

सुमङ्गला प्रिया तस्य, तयोः पुत्रोऽभवद् वरः । तस्मिन् गर्भस्थिते माता, स्वप्ने क्षीरार्णवं पपौ ॥ १९ ॥
गुणसागर इत्याख्या, पृथिव्यां पप्रथेऽस्य तत् । क्रमेण वर्द्धमानोऽसौ, प्रपेदे मध्यमं वयः ॥ २० ॥
परमाजन्म भोगेषु, विरतो गुणसागरः । चक्रे रमासु रामासु, न मनागपि मानसम् ॥ २१ ॥
अथ तत्र पुरेऽभूवन्, महेभ्या अष्ट विश्रुताः । तेषां पुत्र्योऽभवन्नष्टौ, तास्तारुण्यमगुः क्रमात् ॥ २२ ॥
अष्टापि ताः सुता वीक्ष्य, कुमारं गुणसागरम् । बद्धानुरागास्तत्रोच्चैः, प्रत्यज्ञासुश्च तं पतिम् ॥ २३ ॥
तासां तं निश्चयं ज्ञात्वा, पितरस्ते कनीर्निजाः । गुणसागरसंज्ञाय महेभ्याङ्गभुवे ददुः ॥ २४ ॥
वातायनगतोऽन्येद्युर्ददर्श गुणसागरः । मूर्त्तं धर्ममिव प्राप्त–शमं वाचंयमं जवात् ॥ २५
क्वाप्यपश्यमिदं रूप–मित्यूहापोहसङ्गतः । प्राग् जन्म निजमस्मार्षीत्–श्रामण्यं च पुराकृतम् ॥२६ ॥
ततो विशिष्टसंवेग–रङ्गसङ्गतमानसः । पितरौ स्माह न स्थातुं, क्षमेऽहं भवचारके ॥ २७ ॥
तत् प्रसद्य व्रतादानाऽनुमतिं मे प्रयच्छतम् । प्राहतुस्तौ वत्स ! किं ते, सांप्रतं यौवने व्रतम् ॥ २८ ॥
अथ चेद् वत्स निर्बन्धो, व्रते ते न निवर्त्तते । तदोद्वाह्य प्रियाः पश्चात्, कुर्यास्तूर्णं स्वमीप्सितम् ॥ २९ ॥
प्रतिपद्य वचः पित्रोः, कुमारो गुणसागरः । महामहेन ता अष्टा–वपि कन्या व्यवाहयत् ॥ ३० ॥
पाणीन् गृहीत्वा कन्याना–मसौ मातृगृहे स्थितः । प्रावर्त्तत पुरस्तत्र, नाटकं चित्रकृत् तदा ॥ ३१ ॥
गुणसागरस्तु नासास्ति–मिताक्षः संयतेन्द्रियग्रामः । दध्यावेकाग्रमना मुनि–र्भविष्याम्यहं प्रातः ॥ ३२ ॥
एवं तपः करिष्ये तथा विधास्यामि गुरुजनविनयम् । व्रतयोगेषु यतिष्ये स्थास्यामि ध्याननियमेषु ॥ ३३ ॥

॥ ३४ ॥

एवं निभृतं ध्यायन् स्मरन् श्रुतं पूर्वजन्मनाभ्यस्तम् । प्रतिपद्य भावसंयम-मभङ्गसंवेगरससिक्तः ॥ ३५ ॥

उदितोदितविशदतरा-ध्यवसायवशोऽनुसमयमेष मुनिः । निर्दग्धघातिकर्मा, केवलममलं क्षणादापत् ॥ ३६ ॥

प्रणयिन्योऽपि नवास्ताअस्ता-खिलकर्मघर्मसन्तापाः । प्रतिपन्नभावचरणा, इह केवलसंविदमविन्दन् ॥ ३७ ॥

तत्केवलमहिमानं, कर्तुमथाजग्मुरनिमिषाधीशाः । नेदुर्दिवि दुन्दुभयो भेजुर्भव्या मुदममन्दाम् ॥ ३८ ॥

तद्वीक्ष्य श्वसुरयुगले अपि तथा सुतवधूनाम् । केवलविभवं ते अपि मुहुर्मुहुस्तदनुमोदनया ॥ ३९ ॥ [ युग्मम् ]

सञ्जातकर्मलाघववशेन सुविशुद्धसंयमरसेन । प्रक्षालितकर्ममले, लेभाते केवलमनन्तम् ॥ ४० ॥

इत्येतत् तव नृपते !, विज्ञप्तं सांप्रतं महाश्चर्यम् । भूवल्लभोऽपि तदिदं, निशम्य सम्यग् विभावयति ॥ ४१ ॥

गुणसागरः स सत्यं, गुणसागर एव येन निजकार्यम् । संसाधितं क्षणेन, क्षयेण दुष्कर्मजालस्य ॥ ४२॥

जानन्नप्येष कथं पतितो, राज्याख्यकूटयन्त्रेऽस्मिन् । गुरुजनदाक्षिण्यवशा-दुदास्तिमानात्मकार्येऽपि ॥ ४३ ॥

तदहं कदा प्रपत्स्ये भवमथनीं भगवतीं महादीक्षाम् । समशत्रुमित्रवृत्तिः, कदा चरिष्याम्यनिर्बन्धः ॥ ४४ ॥

इति भावनावशात्मा क्षिप्त्वा क्षणतोऽप्यशेषकर्माणि । पृथ्वीचन्द्रमहीन्द्रः प्रपेदिवान् केवलज्ञानम् ॥ ४५ ॥

श्रुत्वैतत् तच्चरितं षोडश पृथ्वीपतेः प्रिया अपि ताः । संवेगरङ्गसङ्गतमनसोऽवापुः परं ज्ञानम् ॥ ४६ ॥

हरिसिंहोऽपि महीभृत्, पद्मावत्या समन्वितोऽपि तदा । केवलिवचसा कृतकर्म-निर्जयः केवलमवापत् ॥ ४७ ॥

अथ सुधनसार्थवाहो, व्यजिज्ञपत् तं तदा महर्षीन्द्रम् । पृथ्वीचन्द्र भगवंस्तव गुणसागरमहर्षेश्च ॥ ४८ ॥

सोदरयोरिव साम्यं साम्यनिधे ! दृश्यते कथमिहेदृक् ? । केवल्यजलपदभवं कुसुमायुध इत्यहं पूर्वम् ॥ ४८ ॥

आसीद् गुणमणिसिन्धुर्बन्धुर्मे कुसुमकेतुरिति नाम्ना । स च गुणसागर इत्ययमभूद् यथार्थाभिधस्तत्र ॥ ४९ ॥
तदखिलमिहेति हेतोर्मम तस्य च दृश्यमस्ति सादृश्यम् । श्रुत्वेति साधुमधुनोऽप्युधुनोत् सुधनो वचः स्वशिरः ॥ ५० ॥
संप्राप्तपरमबोधः सोऽधःकृतदुष्कृतोऽथ गृहिधर्मम् । प्रतिपद्य हृद्यमभवदत्रामुत्रापि शर्मपदम् ॥ ५१ ॥
अनेकलक्षाण्यब्दानां केवल्यं प्रतिपाल्य ते । पृथ्वीचन्द्रादयः सर्वे शिवश्रियमशिश्रयन् ॥ ५२ ॥

इति श्रीमुद्रित-पृथ्वीचन्द्रचरितादुद्धृता एकादशभवगता पृथ्वीचन्द्रकथा संपूर्णा.

## ४८ देवकीषट्पुत्रकथा

श्री वसुदेव-देवक्योः, कंसेनोपयमोत्सवः । सुहृद्-भगिन्योः स्नेहेन, प्रारब्धो मथुरापुरि ॥ १ ॥
तत्र कंसानुजः कंस-सद्माऽऽगादतिमुक्तकः । विहरन् पारणाहेतोः, पुर्वोपात्तव्रतो व्रती ॥ २ ॥
जरासन्धसुता जीव-यशा कंसप्रियाऽऽह तम् । साधो ! साधूत्सवाहेऽस्मिंस्त्वमागा देवरोऽसि मे ॥ ३ ॥
एहि सार्द्धं मया नृत्य, हस गाय पिबाऽऽसवम् । लगित्वोन्मत्तया कण्ठे, सोऽकदर्थि गृहस्थवत् ॥ ४ ॥
स मुनिर्ज्ञानवानूचे, मुग्धे ! माद्यसि किं मुधा ? । देवक्याः सप्तमाद् गर्भात्, पति-पित्रोस्तव क्षयः ॥ ५ ॥
वज्रपातमिवासह्यं, तत् श्रुत्वा कंसपत्न्यसौ । द्विधोत्तीर्णमदावस्था-ऽवस्थां पत्ये शशंस ताम् ॥ ६ ॥
कंसः साशङ्क आचख्यौ, प्रिये ! प्रकृतिभाषिणाम् । अपि मोघीभवेद् वज्रं, महर्षीणां वचो न च ॥ ७ ॥
परं वाच्यं न कस्यापि, यतिष्ये यावदस्मि न । अस्मिन् कार्ये यतो मन्त्रः, षट्कर्णो भिद्यते बहिः ॥ ८ ॥

इत्युक्त्वा मदिरावस्थां, नाटयन् निर्मदोऽपि सः । वसुदेवान्तिकं दूराद्, रचिताञ्जलिरागमत् ॥ ९ ॥
अभ्युत्थाय जगादैनं, वसुदेवः ससम्भ्रमम् । प्राणप्रियसुहृत् ! किञ्चिद्, वक्तुकाम इवेक्ष्यसे ॥ १० ॥
ब्रूहि यच्छामि किं तुभ्यं ?, ततः कंसोऽब्रवीत् प्रिय ! । कृतार्थोऽहं कृतो जीव–यशादापनतः पुरा ॥ ११ ॥
इदानीं देवकीजात–मात्रसप्तार्भकार्पणात् । कृतार्थयेति तेनोक्ते, प्रपेदे शौरिरप्यृजुः [ प्यदः ] ॥ १२ ॥
भावानभिज्ञा कंसस्य, देवक्यपि जगाद भोः ! । किं कथ्यं मेऽत्र पुत्राणा–मन्तरं त्वद्–दशार्हयोः ? ॥ १३ ॥
विधिना विधिनेवात्राऽऽवयोर्योगस्त्वया कृतः । सर्वकार्याधिकारी त्वं, किं ब्रूषेऽनधिकारिवत् ? ॥ १४ ॥
किं देवकि ! बहूक्तेना–ऽऽयत्ता गर्भास्तवास्य ते । ससेत्युक्ते दशार्हेण, पत्न्यपि प्रत्यपद्यत ॥ १५ ॥
महाप्रसाद इत्युक्त्वा, कंसः क्षीवा(बा)पदेशतः । दशार्हेण समं पीत्वा, सुरां स्वाश्रयमाश्रयत् ॥ १६ ॥
वाक्शूरः शौरिरश्रौपीदा–पँ वाक्यं दुरायति । दम्भिना च्छलितोऽस्मीति, सुतरां चान्वतप्यत ॥ १७ ॥
इतश्च भद्दिलपुरे, श्रेष्ठी नागाह्वयोऽभवत् । सुलसाऽनलसा धर्मे, तत्पत्नी तौ महाऽऽस्तिकौ ॥ १८ ॥
शैशवे सुलसाश्राद्धथा आचख्यावतिमुक्तकः । चारणर्षिरसौ बाला, भवित्री निन्दुरेव यत् ॥ १९ ॥
तपसाऽऽराधितो नैगमेष्याख्यः परिणीतया । तया पुत्रार्थमित्यूचे, तां ज्ञात्वाऽवधिना सुरः ॥ २० ॥
अहं धार्मिके(कि) ! देवक्या, गर्भान् कंसेन याचितान् । मार्यमाणान् परावृत्य, निन्दोर्दास्यामि तांस्तव ॥२१ ॥
इत्युक्त्वा पुष्पवत्यौ ते, देवकी–सुलसे समम् । स्वशक्त्या स सुरश्चक्रे, गुर्विण्यौ च तथा समम् ॥ २२ ॥
सुषुवाते समं दिव्य–प्रभावादमरः पुनः । सुलसायै ददौ गर्भान्, देवक्याः षडपि क्रमात् ॥ २३ ॥

देवक्यै सौलसान् (सुलासा-) गर्भान्, मृतानर्पितवान् सुरः। दृपद्यास्फालयत् कंसो, निस्तृंशो(शैः) भिन्नवस्त्रवत् ॥२४॥
षडेवं देवकीगर्भाः, सुलसाया गृहे सुखम् । तस्या एव वव्रृधिरे, स्तनन्धयाः स्तनन्धयाः ॥ २५ ॥
नाम्नाऽनीकयशोऽनन्तसेनावजितसेनकः । निहतारिर्देवयशाः, शत्रुसेनश्च ते त्वमी ॥ २६ ॥
क्रमादुद्यौवनाः कन्याः पितृभ्यां परिणायिताः । द्वात्रिंशतं ते प्रत्येकं, भोगान् बुभुजिरे चिरम् ॥ २७ ॥
इतश्च पावयन् पादैः, श्रीनेमिरवनीतलम् । ईयिवान् भद्दिलपुरं, सेव्यस्त्रिदशकोटिभिः ॥ २८ ॥
श्रुत्वाऽन्ते तेऽर्हतो धर्मं, जगृहुः षडपि व्रतम् । तपस्यन्तस्तपस्तीव्रं विजह्रुरर्हता समम् ॥ २९ ॥
विहरन् नेमिनाथोऽथ, द्वारकां पुनराययौ । तस्थौ सहस्राम्रवणोपवने देवसंस्कृते ॥ ३० ॥
षडपि भ्रातरः षष्ठपारणकं(क) चिकीर्षवः । त्रिधा युगलिनो भूत्वा, विविशुर्द्वारिकां पुरीम् ॥ ३१ ॥
आद्येऽनीकयशोऽनन्तसेनौ युगलके मुनी । आयातौ देवकीसद्म, तौ दृष्ट्वा साऽत्यमोदत ॥ ३२ ॥
प्रत्यलाभयदेतौ सा, मोदकैः सिंहकेसरैः। जग्मतुस्तौ ततश्चान्यौ, भ्रातरावागतौ मुनी ॥ ३३ ॥
अजितसेन—निहताख्यावपि च प्रतिलाभितौ । पुनर्मुमुक्षोस्तादृक्षं, तृतीयं युग्ममागतम् ॥ ३४ ॥
देवयशः—शत्रुसेनाभिधं पप्रच्छ देवकी । दिङ्मोहो भगवान् ! किं वो, यत् त एवाऽऽगताः पुनः ॥ ३५ ॥
किमेत एवेति मतिभ्रमो यूयं परे पुनः ? पुर्यां वा स्वर्गकल्पायां, भैक्ष्यं नार्पैभिराप्यते ॥ ३६ ॥
ऊचतुस्तौ न दिङ्मोहः (दिङ्मोह न), किन्तु षट् सोदरा वयम् । सुलसा—नागयोः पुत्रा, भद्दिलद्रङ्गवासिनः ॥३७॥
प्राव्रजामो वयं धर्मं, श्रुत्वाऽन्ते नेमिनो हि षट् । भवद्गृहे त्रियुग्मेन, पारणार्थमिताः पृथक् ॥ ३८ ॥

देवक्यचिन्तयत् साम्यं, कृष्णस्यैष्वीक्ष्य(वेक्ष्य)ते कियत् । तिलस्यापि तिला नैवं, तत्किं नामी ममाऽऽत्मजाः? ॥३९॥
जीवदृष्टसुताऽऽख्याता, पुरा(रो)ऽतिमुक्तसाधुना । साऽधुना मे मनोभ्रान्तिरेषु पृच्छामि तद् विभुम् ॥ ४० ॥
ततः प्रातर्द्वितीयेऽह्नि, सन्देहापोहहेतवे । ननाम नेमिनं गत्वा, देवकी धर्मसद्मगम् ॥ ४१ ॥
तद्भावं भगवान् जानन्नूचे देवक्यमी सुताः । तवेति सुलसाया(यै) ये, प्राग् दत्ता नैगमेषिणा ॥ ४२ ॥
देवकी तान् षडप्यृषीन्, पश्यन्त्युत्प्रस्रव(त्पक्षर)स्तनी । ववन्दे चाऽऽह जीवन्तो, दिष्ट्या दृष्टाः स्वसूनवः ॥ ४३ ॥
राज्यं वा व्रतसाम्राज्यं, प्राज्यं मत्कुक्षिजन्मनाम् । मुदेऽदः किन्तु खेदाय, स्वयं(मया)नैकोऽपि लालितः ॥ ४४ ॥
प्रभुरप्यभ्यधादेवं, मुधा मा ताम्य (ताम्यसि) देवकि ! । स्वार्जितं भुज्यते कर्म, न परः कोऽपि कारणम् ॥ ४५ ॥
अहार्षीः सप्त रत्नानि, सपत्न्यास्त्वं(स्व) पुरा भवे । रुदन्त्या अर्पितं चैकं, तस्येदं कर्मणः फलम् ॥ ४६ ॥
प्राग्जन्मकर्म निन्दन्ती, नत्वेशं गृहमागता । दुस्थावस्थेव सा तस्थौ, पुत्रलालनलालसा ॥ ४७ ॥
विमना दृश्यसे मातः !, किमित्युक्ताऽच्युतेन सा । ऊचे किं जीवितव्येन ?, ममान्तर्गडुनाऽमुना ॥ ४८ ॥
वर्द्धितोनन्दगेहे त्वं, नागागारे(नागगेहे)तवाग्रजाः । पालितं न मयाऽपत्यं, किमपीवान्यपुष्ट्या ॥ ४९ ॥
तद् वत्स ! वत्सकं स्वी(स्वं)यं, धन्या गौरपि [प्रति] पालयेत् । दूयेऽहं नितरामात्मापत्यलालनबालिशा ॥ ५० ॥
पूरयाम्यम्ब ! ते वाञ्छामित्युक्त्वाऽगाद् गृहं हरिः । हरिराराधयामास, सोनान्यं नैगमेषिणम् ॥ ५१ ॥
सन्तुष्टः स्पष्टमाचष्टा–ष्टमो भ्राता हरे ! तव । भावी परं स तारुण्य, एवाऽऽशु प्रव्रजिष्यति ॥ ५२ ॥

तद्वचोऽनन्तरं कश्चित्, स्वर्गात् च्युत्वा सुरोत्तमः । उत्पेदे देवकीकुक्षौ, शुक्त्यामिव सुमौक्तिकम् ॥ ५३ ॥
क्रमाद् जज्ञेऽङ्गजो गज-सुकुमालाऽह्वयोऽद्भुतः । लालयन्ती स्वयं कृष्ण-कल्पं तं मुमुदे प्रसूः ॥ ५४ ॥
पित्रोर्नेत्रोत्सवो भ्रातृ-प्रीतिपात्रमसौ क्रमात् । उद्यौवन उपयेमे, द्रुमपुत्रीं प्रभावतीम् ॥ ५५ ॥
क्षत्रियाणीभवां सोमां, सोमशर्मद्विजात्मजाम् । मातृ-भ्रात्रुपरोधेनानिच्छन् गज उपायत ॥ ५६ ॥
तदैव समवासार्षीत्, श्रीनेमिस्तदुपान्तिके । धर्मं गजसुकुमालः, सभार्यो विधिना(ऽवहितो)ऽशृणोत् ॥ ५७ ॥
आमन्त्र्य माता-पित्रादि-वर्गं वैराग्यरङ्ग(ङ्गि)तः । गजः सभार्यः प्राव्राजीद्, वृजिनव्रजवर्जितः ॥ ५८ ॥
ततो रुरुदुरत्यन्तं, तद्वियोगासहिष्णवः । पितरौ भ्रातरो ज्येष्ठा, गजे प्रव्रजिते सति ॥ ५९ ॥
सायं पृष्ट्वा प्रभुं तस्थौ, गजः प्रतिमया निशि । स्मशानभूमौ दृष्टश्च, ब्रह्मणा सोमशर्मणा ॥ ६० ॥
स दध्यौ यदि पाखण्ड-चिकीरेष दुराशयः । उपयेमे कथङ्कारं, मम पुत्रीं तपस्विनीम् ? ॥ ६१ ॥
एवं विचिन्त्य चित्याया, ज्वलदङ्गारपूरितम् । अतिष्ठिपत् घटीखण्डं(कण्ठं), स तन्मूर्ध्नि विरुद्धधीः ॥ ६२ ॥
दह्यमानोऽग्निना तेन, सहमानः परीषहम् । दग्धकर्मेन्धनोत्पन्नकेवलोऽगाद् गजः शिवम् ॥ ६३ ॥

इति श्रीमुद्रित-ऋषिमण्डलवृत्तितः उद्धृता देवकीषट्पुत्रकथा संपूर्णा

## ४९ समभावोपरि दमदन्तराजर्षिकथा

हस्तिशीर्षपुरे राजा, दमदन्ताभिधोऽभवत् । सेवन्ते यत्प्रतापार्त्ता, गुहां घूका इवारयः ॥ १ ॥

दमदन्त—पाण्डवानां, जज्ञे वैरं परस्परम् ॥ २ ॥

इतो गजपुरे राज्यं, कुर्व्वते पाण्डुसूनवः । पाण्डवैरेत्य तद्देशो, विध्वस्तो ज्वालितो भृशम् ( तस्तराम् ) ॥ ३ ॥

जरासन्धस्य सेवायै, दमदन्तो गतोऽन्यदा । सैन्यावेशेन महता, रुरोध हस्तिनापुरम् ॥ ४ ॥

सञ्चाऽऽगाद् दमदन्तोऽथ, वीक्ष्य देशं विनाशितम् । ग्रहाणां महिमा तावद्, यावन्नोदेति भास्करः ॥ ५ ॥

पुरान्तः पाण्डवा भीत्या, विविशुर्निर्ययुर्न हि । क्रीडिता विषये शून्ये, निर्गच्छत यदीश्वराः ॥ ६ ॥

ज्ञापितं दमदन्तेन, दासेरा जम्बुका इव । प्रत्यावृत्तः स्वराज्यर्द्धिं, बुभुजे भामिनीमिव ॥ ७ ॥

निर्ययुः पाण्डवा नैव—मुक्तेऽपि दमदन्तराट् । प्रपन्नो दमदन्तर्षिरेकाकिप्रतिमां स्थिरः(तः) ॥ ८ ॥

निर्विण्णकाम—भोगोऽथ, प्रव्रज्याऽन्ते गुरोः क्रमात् । अत्रान्तरे तु यात्रार्थं, निर्ययौ राड् युधिष्ठिरः ॥ ९ ॥

प्रतिमामाददेऽन्येद्युर्मुनिर्गजपुराद् बहिः । भीमाद्यैरनुजैश्चैवं, वन्दितश्च स्तुतो भृशम् (तस्तराम्) ॥ १० ॥

मार्गे निरीक्ष्य तमृषिं, ववन्दे मुदितो नृपः । स्वामिन् ! स दमदन्तोऽयं, यूयं प्राग् येन द्वेपिताः ॥ ११ ॥

ततो दुर्योधनोऽप्यागात्, तस्योक्तमनुजीविभिः । क्षिप्त्वा दृषदमेकैकं, दृषद्राशीकृतो मुनिः ॥ १२ ॥

आहतो मातुलिङ्गेन, राज्ञाऽन्यैश्चानुजीविभिः । स मुनिः क्वेक्षितो यः प्राग् ?, राज्ञे ते तमदर्शयन् ॥ १३ ॥

प्रत्यावृत्तः पुनर्धर्म—पुत्रोऽपृच्छत् स्वसेवकान् । पृष्टे युधिष्ठिरेणेति, शशंसुस्ते सुयोधनम् ॥ १४ ॥

निर्मिताऽऽशातनाऽमुष्य, महर्षेः केन पापिना ? । निष्कास्याभ्यञ्जितः साधुस्तैलेन क्षामितस्ततः ॥ १५ ॥

कृत्वेर्ष्यां धर्मपुत्रेण, बाढं दुर्योधनोपरि ।

निर्विशेषमनोवृत्तिधर्मपुत्रे सुयोधने । भगवान् दमदन्तर्षिर्विजहार वसुन्धराम् ॥ १६ ॥

इति श्रीमुद्रित--ऋपिमण्डलप्रकरणवृत्तित उद्धृता समभावोपरि दमदन्तमहर्षिकथा सम्पूर्णा.

## ५० श्री केशीगौतमीय प्रबन्धः

प्रतापतपनोऽत्यन्तं, तपत्यद्यापि यत्प्रभोः । दोपाकरोदयध्वंसी, स श्रीपार्श्वः श्रियेऽस्तु वः ॥ १ ॥
तस्य शिष्यशिरोरत्नं, केशिनामा महामुनिः । अवधिज्ञानवान् ग्रामानुग्रामं विहरन्नगात् ॥ २ ॥
पुर्यां श्रावस्त्यामन्येद्युर्वृद्धः शिष्यपरीवृतः । शुद्धोर्व्यां समवासार्पीत्, चोद्याने तिन्दुकाभिधे ॥ ३ ॥ युग्मम्
इतश्च धर्मतीर्थस्य, कर्त्ता हर्त्ताऽखिलापदाम् । भगवान् वर्द्धमानोऽभूद्, जगन्नेत्रसुधाञ्जनम् ॥ ४ ॥
शिष्यमुख्योऽभवत् तस्य, गौतमो द्वादशाङ्गवित् । शिष्यसङ्घसमाकीर्णः, श्रावस्त्यां सोऽप्यथागमत् ॥ ५ ॥
उद्याने समवसृतः, कोष्ठके प्रासुकावनौ । द्वयोर्गणभृतोर्दैवादेवं तत्राऽऽगमोऽभवत् ॥ ६ ॥
तयोर्गोचरचर्यायां, शिप्याणां भ्रमतां द्वयोः । वीक्ष्यान्योन्यमियं चिन्ता, चेतस्याविरभूत् तदा ॥ ७ ॥
कीदृग् धर्मोऽयमस्माकं ‘ तेपां वा कीदृशस्त्वयम् ? आचारधर्मप्रणीधिरयं वा स नु(तु) कीदृशः ॥ ८ ॥
चातुर्यामश्च यो धर्मो, यश्चायं पञ्चशिक्षितः । देशितो वर्द्धमानेन, पार्श्वेन च महार्हता ॥ ९ ॥
अचेलकश्च यो धर्मो, यश्चायं सान्तरोत्तरः । कार्यमेकं प्रपन्नानां, विशेपे किं नु कारणम् ? ॥ १० ॥
अथ तौ तत्र शिप्याणां, विज्ञाय प्र(-याथ)वितर्कितम् । समागमे कृतमती, अभूतां केशि—गौतमौ ॥ ११ ॥

कुलज्येष्ठतया केशि-संश्रितं शिश्रिये वनम् ॥ १२ ॥
गौतमः प्रतिरूपज्ञः, शिष्यसम्पत्समन्वितः । प्रतिरूपां प्रतिपत्तिं, सम्यक् सम्प्रतिपद्यते ॥ १३ ॥
कुमारश्रमणः केशिर्वीक्ष्य गौतममागतम् । गौतमस्य निषद्यायै, क्षिप्रमर्पयति स्म सः ॥ १४ ॥
पलालं प्रासुकं शुष्कमदभ्रदर्भगर्भितम् । उभौ निषण्णौ शोभाते, चन्द्र-सूर्यसमश्रियौ ॥ १५ ॥
केशिः कुमारश्रमणो, गौतमश्च महायशाः । गृहस्थानामनेकाश्च, साहस्र्यः सहसाऽऽययुः ॥ १६ ॥
ईयुः पाखण्डिनस्तत्र, बहवः कौतुकार्थिनः । अदृश्यानां च भूतानामासीत् तत्र समागमः ॥ १७ ॥
देव--दानव--गन्धर्व-यक्ष-किन्नर-रक्षसाम् । एवं तेनर्षिणा प्रोक्ते, गौतमोऽप्यब्रवीदद: ॥ १८ ॥
पृच्छामि त्वां महाभाग !, केशिर्गौतममब्रवीत् । एवं केशिरनुज्ञातः, पप्रच्छेदं च गौतमम् ॥ १९ ॥
यथेच्छं पृच्छ भोः स्वच्छ ! गौतमः केशिमब्रवीत् । देशितो वर्द्धमानेन पार्श्वनाथेन चार्हता ॥ २० ॥
च(चा) तुर्यामश्च यो धर्मो, यश्चायं पञ्चशिक्षितः । मेधाविन् ! द्विविधे धर्मे, कथं विप्रत्ययो न ते ? ॥ २१ ॥
कार्यमेकं प्रपन्नानां, विशेषे किं नु कारणम् ? । प्रज्ञा समीक्षते धर्मतत्त्वं तत्त्वविनिश्चयम् ॥ २२ ॥
केशिमेवं ब्रुवाणं तु, तं चेदं प्राह गौतमः । मध्यमास्तु ऋजु-प्र(प्रा)ज्ञास्तेन धर्मो द्विधा कृतः ॥ २३ ॥
पूर्वर्षयस्त्वृजु-जडा, वक्र-जडाश्च, पश्चिमाः । कल्पो मध्यमकानां तु, सुविशोध्यः सुपालकः ॥ २४ ॥
पूर्वर्षीणां दुर्विशोध्योऽन्त्यानां दुरनुपालकः । संशयोऽन्यमपि ब्रूहि, तं महाप्राज्ञ ! गौतम ! ॥ २५ ॥
इत्युक्ते गौतमेनाऽऽख्यत्, केशिः छिन्नो भदन्त ! मे । देशितो वर्द्धमानेन, पार्श्वेन च महात्मना ॥ २६ ॥
अचेलकश्च यो धर्मो, यश्चायं सान्तरोत्तरः ।

कार्यमेकं प्रपन्नानां, विशेषे किं नु कारणम् ? । मेधाविन् ! द्विविधे लिङ्गे, कथं विप्रत्ययो न ते ? ॥ २७ ॥
ब्रुवाणमेवं तं केशिमुवाचेदं च गौतमः । विज्ञानेन समागम्य(त्य), तदिष्टं धर्मसाधनम् ॥ २८ ॥
प्रत्ययार्थं च लोकानां नानाविधविकल्पनम् । यात्रार्थं ग्रहणार्थं च, लोके लिङ्गप्रयोजनम् ॥ २९ ॥
इत्युक्ते गौतमेनाऽऽख्यत्, केशिः छिन्नो भदन्त ! मे । संशयोऽन्यमपि ब्रूहि, तं महाप्राज्ञ ! गौतम ! ॥ ३० ॥
बहुशत्रुसहस्राणां, मध्ये तिष्ठसि गौतम !, जेतुं त्वां तेऽभिगच्छन्ति, कथं ते निर्जितास्त्वया ? ॥ ३१ ॥
पञ्चैकस्मिन् जिते शत्रौ, जितास्ते(स्तैः) पञ्चभिर्दश । दशप्रकारांस्तान् जित्वा, सर्वशत्रून् जयाम्यहम् ॥ ३२ ॥
केऽत्रोक्ताः शत्रवश्चेति, केशिर्गौतम-मब्रवीत् । केशिना पृष्ट इत्याख्यद् , गौतमोऽपीदमुत्तरम् ॥ ३३ ॥
एक आत्माऽजितः शत्रुः, कषाया इन्द्रियाणि च । तान् जित्वाऽहं यथान्यायं, विहरामि महामुने ! ॥ ३४ ॥
इत्युक्ते गौतमेनाऽऽख्यत्, केशिः छिन्नो भदन्त ! मे । संशयोऽयं(ह्य) परमपि, तं ब्रूहि प्राज्ञ ! गौतम ! ॥३५॥
दृश्यन्ते बहवो लोके, पाशबद्धाः शरीरिणः । मुक्तपाशो लघू(घु)भूतः, कथं विहरसे मुने ! ? ॥ ३६ ॥
छित्वा सर्वांश्च तान् पाशा-नुपयातो निहत्य तान् । मुक्तपाशो लघू(घु)भूतो, विहरामि यथासुखम् ॥ ३७ ॥
पाशा अत्र च के उक्ताः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमाख्यत ॥ ३८ ॥
राग-द्वेषादयस्तीव्राः, स्नेहपाशा भयङ्कराः । तान् छित्वाऽहं यथान्यायं, विहरामि यथाक्रमम् ॥ ३९ ॥
साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम ! ॥ ४० ॥
अन्तर्हृदयसम्भूता, लता तिष्ठति गौतम ! । फलानि विषभक्ष्याणि, सूते सा तूद्धृता कथम् ? ॥ ४१ ॥

लतां तां सर्वतश्छित्त्वा, समुद्धृत्य समूलिकाम् । विहरामि यथान्यायं, मुक्तोऽस्मि विपभक्षणात् ॥ ४२ ॥
का लतेह पुनः प्रोक्ता ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ४३ ॥
भवतृष्णा लता प्रोक्ता, भीमा भीमफलोदया । तामुद्धृत्य यथान्यायं, विचरामि यथासुखम् ॥ ४४ ॥
साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम ! ॥ ४५ ॥
सम्यक् प्रज्वलिता घोरास्तिष्ठन्ति गौतमाग्नयः । ये दहन्ति शरीरस्थाः, कथं विध्यापितास्त्वया ? ॥ ४६ ॥
श्रोतसो गुरुमेघोत्थाद्, गृहीत्वा जलमुत्तमम् । सिञ्चामि सततं तांस्तु, सिक्तास्ते न दहन्ति माम् ॥ ४७ ॥
अग्नयश्चेह के प्रोक्ताः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ४८ ॥
कषाया अग्नयः प्रोक्ताः, श्रुत–शील–तपोजलम् । श्रुतधाराभिहताः सन्तो, भिन्नास्ते न दहन्ति माम् ॥ ४९ ॥
साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं:वद गौतम ! ॥ ५० ॥
अयं साहसिको भीमो, दुष्टाश्वः परिधावति । यस्मिंश्च गौतमाऽऽरूढस्त्वं नापह्रियसे कथम् ? ॥ ५१ ॥
प्रधावन्तं निगृह्णामि, श्रुतरश्मिसमाहितम् । न गच्छति ममोन्मार्गं, मार्गं च प्रतिपद्यते ॥ ५२ ॥
कश्चाश्वः पुनरत्रोक्तः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ५३ ॥
मनः साहसिको भीमो, दुष्टाश्वः परिधावति । तं निगृह्णाम्यहं सम्यक्, कचिका[कन्थकं]धर्मशिक्षया ॥ ५४ ॥
साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम ! ॥ ५५ ॥
कुपथा बहवो लोके, येभ्यो नश्यन्ति जन्तवः । वर्त्तमानोऽध्वनि कथं, त्वं न नश्यसि गौतम ! ? ॥ ५६ ॥

ये च मार्गेण गच्छन्ति, कुमार्गे प्रस्थिताश्च ये । विदिता मम ते सर्वे, तन्न नश्याम्यहं मुने ॥ ५७ ॥
इह मार्गश्च कः प्रोक्तः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ५८ ॥
पाखण्डिनोऽलीकवाचः, सर्वेऽप्युन्मार्गगामिनः । सन्मार्गस्तु जिनाख्यात, एष मार्गो ह्यनुत्तरः ५९ ॥
साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम ! ॥ ६० ॥
प्राणिनां वाह्यमानानां, महावेगेन वारिणा[णः] । शरणं गतिं प्रतिष्ठां द्वीपं, कं [किं] मन्यसे मुने ! ? ॥ ६१ ॥
अस्ति चैको महाद्वीपो, वारिमध्ये महालयः । महावेगस्य पयसो, गतिस्तत्र न विद्यते ॥ ६२ ॥
इह द्वीपश्च कः प्रोक्तः ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ६३ ॥
प्राणिनां वाह्यमानानां, जरा—मरणवेगतः । धर्मो द्वीपः प्रतिष्ठा च, गतिः शरणमुत्तमम् ॥ ६४ ॥
साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम ! ॥ ६५ ॥
बृहत्प्रवाहे पाथोधौ, बेडा विपरिधावति । यस्यां त्वं गौतमाऽऽरूढः, कथं पारं गमिष्यसि ? ॥ ६६ ॥
आश्राविणी तु नौर्यत्र, न सा पारस्य गामिनी । या निराश्राविणी नौर्भोः ! सा पुनः पारगामिनी ॥ ६७ ॥
का प्रोक्ता नौरिह मुने ! ?, केशिर्गौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ६८ ॥
शरीरं नौरिति प्राहुर्नाविको जीव उच्यते । संसारो वारिधिः प्रोक्तो, यं तरन्ति महर्षयः ॥ ६९ ॥
साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं संशयं वद गौतम ! ॥ ७० ॥
अन्धकारे महारौद्रे, तिष्ठन्ति वहवोऽङ्गिनः । प्राणिनां सर्वलोकेऽस्मिन्नुद्योतं कः करिष्यति ? ॥ ७१ ॥

उद्गतो विमलो भानुः, सर्वलोकप्रभाकरः । प्राणिनां सर्वलोकेऽस्मिन्नुद्योतं स करिष्यति ॥ ७२ ॥
भानुश्च क इह प्रोक्तः ?, केशिगौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ७३ ॥
उद्गतः क्षीणसंसारः, सर्वज्ञो जिनभास्करः । प्राणिनां सर्वलोकेऽस्मिन्नुद्योतं स करिष्यति ॥ ७४ ॥
साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । तमन्यमपि मत्सत्कं, संशयं वद गौतम ! ॥ ७५ ॥
प्राणिनां बाध्यमानानां, दुःखैः शारीर-मानसैः । क्षेमं शिवमनाबाधं, स्थानं किं मन्यसे मुने ! ? ॥ ७६ ॥
लोकाग्रेऽस्ति दुरारोहं, स्थानमेकं ध्रुवं ध्रुवम् । यत्र नास्ति जरा-मृत्युर्व्याधयो वेदनास्तथा ॥ ७७ ॥
स्थानमत्र किमुक्तं भोः ?, केशिगौतममब्रवीत् । केशिमेवं ब्रुवाणं तु, गौतमोऽपीदमब्रवीत् ॥ ७८ ॥
निर्वाणमित्यनाबाधं सिद्धिर्लोकाग्रमेव च । क्षेमं शिवमनाबाधं, यच्चरन्ति महर्षयः ॥ ७९ ॥
लोकाग्रेऽस्मिन् दुरारोहं, तत् स्थानं शाश्वताश्रयम् । यत् सम्प्राप्ता न शोचन्ति, भवौघान्तकरर्षयः ॥ ८० ॥
साधु गौतम ! ते प्रज्ञा, छिन्नोऽयं संशयो मम । नमस्ते संशयातीत !, सर्वसूत्रमहोदधे ! ॥ ८१ ॥
एवं तु संशये छिन्ने, केशिघोरपराक्रमः । कृताञ्जलिपुटो नत्वा, गौतमं गणभृद्वरम् ॥ ८२ ॥
पञ्चमहाव्रत(तं) धर्मं भावतः प्रति(त्य)पद्यते(त) । पूर्वार्हतो मते मार्गे, तत्रासौ पश्चिमार्हतः ॥ ८३ ॥ युग्मम्
केशि-गौतमयोर्नित्यं, तस्मिन्नासीत् समागमे । श्रुत-शीलसमुत्कर्षौ, महार्थार्थविनिश्चयः ॥ ८४ ॥
तोषिता परिषत् सर्वा, सन्मार्गे समुपस्थिता । प्रसीदतां भगवन्तौ, संस्तुतौ केशि-गौतमौ ॥ ८५ ॥

इत्युत्तराध्ययनानुसारात् केशिगुरोरयम् । सम्बन्धो दर्शितोऽस्माभिर्भव्यानां भविकेन्दु(न्दु)भिः ॥८६॥

इति श्रीमुद्रित–ऋषिमण्डलवृत्तितः उद्धृत केशीगौतमीय प्रबन्धः सम्पूर्णः.

## ५१ श्रीवीरप्रभुपूर्वमातृपितृसम्बन्धः

अन्येद्युर्भगवान् वीरो, विहरन् समवासरत् । ब्राह्मणकुण्डग्रामस्य बहुशालाभिधे वने ॥ १ ॥
देवाः समवसरणं, चक्रिरे पर्षदाययौ । देवानन्दर्षभदत्तावीयतुर्दम्पती च तौ ॥ २ ॥
प्रभुं नत्वर्षभदत्तो, यथास्थानमुपाविशत् । देवनन्दाऽप्युदानन्दा, पृष्ठस्थाऽस्थात् निजेशितुः ॥ ३ ॥
स्तनाभ्यां प्रक्षरत्स्तन्यां, देवीवानिमिषेक्षणा(ण)म् । पश्यन्तीं तां प्रभुं वीक्ष्य, गौतमोऽपृच्छदुत्सुकः ॥ ४ ॥
जगच्चकोरशीतांशो(शो!), त्वयि सर्वोऽपि सादरः । ब्राह्मणीयं विशेषेण, किमिति ब्रूहि कारणम् ? ॥ ५ ॥
गौतमं गौतमगुरु–रूचे ह्यशीत्यहान्यहम् । कुक्षावमुष्या उषितः, स्नेहोऽस्यास्तन्महान् मयि ॥ ६ ॥
तत् श्रुत्वा दम्पती हृष्टौ, चिन्तयामासतुर्हृदि । अहो ! क्व पितरावावां ?, क्वायं सूनुर्जगत्पिता ? ॥ ७ ॥
उत्थाय नेमतुर्वीरं, पितरौ हर्षनिर्भरौ । तौ ह्यत्र दुष्प्रतीकारौ, चक्रेऽर्हन्निति देशनाम् ॥ ८ ॥
असारसंसृतावत्र, पिताऽयं सूनुरेष वा । घटते विघटते च, सम्बन्धो बहुशोऽङ्गिनाम् ॥ ९ ॥
तद् वस्तु वस्तुतो युक्ति–युक्तं नात्रावभासते । विना दीक्षां तदुच्छित्तिः, सर्वथा नहि जायते ॥ १० ॥
तत् श्रुत्वा तौ पुनर्नत्वा, श्रीवीरमिदमूचतुः । निस्तारय भवादावां, दीक्षातर्याऽधुना विभो ! ॥ ११ ॥

एवमस्त्वर्हता प्रोक्ते, तौ गत्वेशानकूणके । पञ्चमुष्टिकचोत्पाटं, कृत्वा त्यक्त्वा त्वलङ्कृती: ॥ १२ ॥
पुनर्नत्वोचतुर्नाथं, जन्म–मृत्यु–जराऽऽकुलात् । भवान्निस्तारय स्वामिन् !, दीक्षितौ तौ ततोऽर्हता ॥ १३ ॥ [ युग्म
देवानन्दा चन्दनायै, स्थविरेभ्यस्तथर्षभम् । शिक्षाद्वैविध्यसिद्ध्यर्थं, ददौ दीक्षागुरुरजयोः ॥ १४ ॥
पठित्वैकादशाङ्गानि, पालिताखण्डितव्रतौ । देवानन्दर्षभदत्तौ, जग्मतुः पदमव्ययम् ॥ १५ ॥

इति श्रीमुद्रित–ऋपिमण्डलवृत्तितः उद्धृत श्री वीरप्रभुपूर्वमातृपितृसम्बन्धः संपूर्णः

## ५२ श्री प्रत्येकबुद्धकरकण्डुराजर्षिकथा

आसीत् चम्पामहापुर्यां, पार्थिवो दधिवाहनः । चेटकस्य सुता पद्मा–वती तस्य प्रियाऽभवत् ॥ १ ॥
गजाऽऽरूढा धृतच्छत्रा, राज्ञैतद्वेपभूपणा । भ्रमामि वनमित्यस्याः, सम्पन्नो दोहदोऽन्यदा ॥ २ ॥
तदपूर्त्यां कृशाङ्गा सा, पृष्टा राज्ञाऽऽशयं जगौ । ततो राज्ञा धृतच्छत्राऽऽरूढा पद्मावती गजे ॥ ३ ॥
गतोद्यानं['ने'] तदाऽऽद्योभूत्, प्रावृट्कालोऽथ कुञ्जरः । सुगन्धमृत्तिकागन्धा–भ्याहतो वनमस्मरत् ॥ ४ ॥
काननाभिमुखं हस्ती, प्रतस्थेऽवमताङ्कुशः । शक्तोऽनुगन्तुं तं, [न] कश्चित्, न सादी न पदातिकः ॥ ५ ॥
द्राक् नीतौ करिणा तेन, दम्पती तौ महाटवीम् । ऊर्ध्वं['दूराद्'] वटतरुं, दृष्ट्वा, राज्यै राजेदमब्रवीत् ॥ ६ ॥
प्रिये ! यास्यत्यधोऽस्यैष, ग्राह्या शाखा त्वया दृढम् । राज्ञा गृहीता दक्षेण, तस्थौ राज्ञी तथैव हि ॥ ७ ॥
किंकर्त्तव्यतया मूढः, सशोकोऽगाद् गृहं नृपः । निर्मानुषाटवीं नीता, तेनेभेन नृपप्रिया ॥ ८ ॥

तृषार्त्तः प्राविशद् दन्ती, सरश्चक्रेऽम्बुखेलनम् । उत्तीर्णा शनकै राज्ञी, सरसो निर्जगाम च ॥ ९ ॥
न वेत्त्याशां भयभ्रान्ता, पश्यन्ती सर्वतो वनम् । अहो ! कर्मपरीणामो, येनाऽऽसाऽस्मीदृशीं दशाम् ॥ १० ॥
तत् किं कुर्वे ? क्व गच्छामि ?, गतिर्मे केति रोदितुम् । प्रवृत्ता परतन्त्रा सा, क्षणात् चक्रे दृढं मनः ॥ ११ ॥
दध्यौ न ज्ञायते किञ्चिद्, दुष्टश्वापदसङ्कुले । वनेऽस्मिन् भावि मे तस्माद्—प्रमत्ता भवाम्यलम् ॥ १२ ॥
क्षामिताः सर्वसत्त्वौघा(त्त्वाश्च), श्चतुःशरणमाश्रितम् । सागारं स्वीकृतं प्रायं, दुष्कृतं गर्हितं स्वकम् ॥ १३ ॥
कान्दिशीका दिशां(शं) काञ्चित्, ततः पञ्चनमस्कृतिम् । स्मरन्ती चलितैक्षिष्ट, तापसं सैकमग्रतः ॥ १४ ॥
गत्वाऽभिवादितो राज्ञ्या, तापसः पृष्टवानिमाम् । कुतः पुत्र्यागताऽसीहास्र्यैपश्येव वीक्ष्यसे ॥ १५ ॥
सा स्माह यावदानीता, गजेनात्रास्मि कानने । सोऽपि चेटकसम्बन्धी, मा भैषीरिति तां जगौ ॥ १६ ॥
ऊचे च मा स्मा शोचीस्त्वमीदृश्येव भवस्थितिः । हेतुर्योग—वियोगानां, रुक्-शोकादिनिबन्धिनी ॥ १७ ॥
उक्त्वा वनफलैः प्राणा—जीविका कारिता बलात् । नीत्वा वासभुवं काञ्चित्, तामित्याह स तापसः ॥ १८ ॥
हलाकृष्टोर्वरा भद्रे !, नोचिताऽतः परं हि नः । देशो दन्तपुरस्यायं, दन्तवक्रोऽत्र पार्थिवः ॥ १९ ॥
निर्भयाऽत्राधुनागच्छ, यायाश्चम्पापुरीमनु । इत्युक्त्वा तापसः पश्चात्, निवृत्तोऽगादियं पुरम् ॥ २० ॥
पृच्छन्त्युपाश्रयं साध्व्या, गत्वा(ता) नत्वा प्रवर्त्तिनीम् । रुरोद स्थापिता प्रोच्य, तयाऽसह्यां भवस्थितिम् ॥ २१ ॥
ततः संवेगतस्तासां, मूले सा व्रतमग्रहीत् । दीक्षाऽदानभयाद् गर्भः, साध्वीनां नोदितस्तया ॥ २२ ॥
वर्द्धितेऽस्मिन् प्रवर्तिन्याः, सद्भावः कथितः स्वयम् । शासनोड्डाहरक्षार्थं, सा तया स्थापिता रहः ॥ २३ ॥

समं कम्बलरत्नेन, नाममुद्राङ्कितं सुतम् । जातमात्रं स्मशानोर्व्यां, साध्वी पद्मावती जहौ ॥ २४ ॥
ततः स्मशानपालेन, लात्वा पत्न्यै स चार्पितः । अवकर्णिक इत्याख्यां, पितरौ तस्य चक्रतुः ॥ २५ ॥
सा मातङ्ग्या समं प्रीतिं, चक्रेऽपृच्छन्नथाऽऽर्यकाः। साध्वि । क्व गर्भस्ते ? साऽऽख्यत्, मृतो जातोऽत्र उज्झितः॥२६
स क्रीडति समं बालैस्तान् स्माहास्मि नृपो नु वः। करं यच्छन्तु मे कण्डूयनलक्षणमर्भकाः ॥ २७ ॥
रूक्षकच्छूगृहीतत्वात्, करकण्डुरिति व्यधुः । तस्याऽऽख्यां बालकाः सोऽपि, संयत्यामनुरागवान् ॥ २८ ॥
साऽप्यासान् मोदकांश्चारुभिक्षां चास्मै प्रयच्छति । स्मशानं वर्द्धमानोऽसौ(स्कौ) ररक्ष पितुराज्ञया ॥ २९ ॥
कुतश्चित् कारणात् साधु--द्वयं तत्रान्यदाऽऽगतम् । ददर्श वंशजाल्यन्तर्दण्डरत्नं सुलक्षणम् ॥ ३० ॥
मुनिरेकोऽब्रवीदेनं, "यो ग्रहीष्यति पार्थिवः । स भावीति(तः] परं योग्यश्चतुरङ्गुलवर्द्धितः ॥ ३१ ॥
तत् साध्वीसूनुनाऽश्रावि, तथैकेन द्विजन्मना । सोऽग्रहीत् तं रहोऽधस्तात्, खनित्वा चतुरङ्गुलम् ॥ ३२ ॥
विलग्नः करकण्डुस्तं, दण्डो मद्भूभवो ह्ययम् । न दास्यामीति ते तौ तु, गतौ कारणिकान्तिके ॥ ३३ ॥
तैरुक्तं देहि भो बाल !, द्विजायास्मै परं भवान् । गृह्णातु सोऽवदत् कार्यं, केनाप्यन्येन मे नहि ॥ ३४ ॥
ग्रहीष्याम्येनमेवाहं, दण्डमुद्दण्डराज्यदम् । स्मित्वोचुस्ते द्विजायैको, ग्रामो देयस्ततस्त्वया ॥ ३५ ॥
आमि[मे]त्युक्तेऽथ बालेन, नापितोऽस्मै द्विजात् स तैः। बालग्रहो दुर्ग्रहो हि, ब्रुवद्भिरिति तत्पुरः ॥ ३६ ॥
द्विजास्तेन द्विजेनान्ये, प्रोक्ताहत्वाऽमुमर्भकम् । हरामो दण्डकमिति, तत्पित्रा तत् श्रुतं वचः ॥ ३७ ॥
पितृ--पुत्रास्त्रयो(स्ततो) नष्टाः, काञ्चनाख्यं पुरं ययुः । तत्रापुत्रो मृतो राजाऽमात्यैरश्वोऽधिवासितः ॥ ३८ ॥

बहिः सुप्तस्य तस्यान्ते, गत्वा दत्त्वा प्रदक्षिणाम् । स्थितोऽश्वो ददृशुः पौरास्तं सल्लक्षणमादरात् ॥ ३९ ॥
जयशब्दं व्यधुर्नन्दी-तूर्यवादनपूर्वकम् । जृम्भां कुर्वन् स उत्तस्था-वारूढो दिव्यवाजिनम् ॥ ४० ॥
प्रवेशं न ददुर्विप्रा-स्तस्य मातङ्गसूरिति । गृहीतो दण्डकस्तेनाऽऽरब्धो ज्वालितुमग्निवत् ॥ ४१ ॥
भीता विप्राः स्थिताः सर्वे, ततो धिग्जातयः कृताः । वाटधानकवास्तव्याश्च[चा]ण्डालाः करकण्डुना ॥ ४२ ॥
उक्तं च—"दधिवाहनपुत्रेण, राज्ञा नु [तु] करकण्डुना । वाटधानकवास्तव्याश्चाण्डाला ब्राह्मणीकृताः ॥४३॥"
हृत्वाऽवकर्णिकाभिख्यां, पितृभ्यां तस्य सज्जनः । चक्रे बालकृतं नाम, करकण्डुरिति स्फुटम् ॥ ४४ ॥
स समागा[ख्य]द् द्विजो मह्यं, स्वोक्तं ग्रामं नृपा[गमा]र्पय । गृहाणाभिमतं स्वस्य, वाक्शूरः पार्थिवोऽवदत् ॥४५॥
मद्गृहं देय ! चम्पायां, तदासन्नं तम[मा]र्पय । चम्पेशाय ततो लेखः प्रेषितः करकण्डुना ॥ ४६ ॥
स्वदेशे देहि मे ग्राम-मेकं यद् रोचते हि ते । पुरं वा ग्राममुख्यं वा, विषये तद् गृहाण मे ॥ ४७ ॥
दण्डस्पृष्टाहिवद् रुष्टस्तत् श्रुत्वा दधिवाहनः । मातङ्गो वेत्ति नाऽऽत्मानमाज्ञापयति यत् स माम् ॥ ४८ ॥
दूतेनेत्योक्तमस्यैतत्, चम्पा रुद्धाऽऽहवोऽभवत् । साध्वी विज्ञाय तल्लोक-क्षयो मा भूत् कृपां दधौ ॥४९॥
पृष्ट्वा प्रवर्त्तिनीं चम्पा[पां]पुरीमेत्य तपस्विनी । पिताऽयं वत्स ! ते पूज्य, इत्याख्यत् करकण्डवे ॥ ५० ॥
तेन तौ पितरौ पृष्टौ, ताभ्यामुक्तं यथास्थितम् । तथाऽप्यहङ्कारवशात्, पितुरन्ते न याति सः ॥ ५१ ॥
ततोऽन्तःपुरमार्याऽगात्, नम्रा दास्योऽरुदंस्तराम् । श्रुत्वाऽऽगत्य नृपो नत्वाऽपृच्छत् तं गर्भमार्यिकाम् ॥ ५२ ॥
साऽऽहैष येन ते रुद्धं, पुरं हृष्टः स निर्ययौ । मिलितौ पितृ-पुत्रौ तौ, हर्षाद्वैतात्मतां गतौ (तौ श्रीज्यङ्गजौ) ॥५३॥

शासको द्विषाम् ॥ ५४ ॥

दत्त्वा राज्यद्वयं सूनोः, प्राव्राजीद् दधिवाहनः । करकण्डुरभूदुग्र-शासनः शासको द्विषाम् ॥ ५५ ॥
स गोकुलप्रियस्तस्य, तान्यनेकानि जज्ञिरे । शरत्कालेऽन्यदाऽद्राक्षीद्, वत्समेकं नृपोऽद्भुतम् ॥५६ ॥
कुकु(कु)द्मण्डमिव श्वेत-मुच्छलत्पुच्छपिच्छलम्। स्थूल (लं)गात्रं प्रीतिपात्रं, तं वीक्ष्य मुमुदे नृपः ॥ ५७ ॥
स गोपान् प्राह मा कुर्युरस्याम्बादोहनक्रियाम् । वर्द्धमानोऽन्यधेनूनां, पायितव्यः पयः पुनः ॥ ५८ ॥
प्रतिपन्नं वचो राज्ञो, गोपैर्गोपुत्रकः पुनः । जज्ञे तीक्ष्णविषाणाग्रोऽतिस्थूलगलकम्बलः ॥ ५९ ॥
अर्दयन् निर्दयं( भिन्दयन् )शृङ्गैर्बलीवर्दान् विमर्दनात् । कूर्दमानोऽन्यदा राज्ञा, जातस्थामेक्षितः स तु (स्वयम्] ॥६०॥
पुना राजाऽऽगतोऽद्राक्षीत्, पतितं तं जरद्गवम्। पङ्कु[ङ्क]कैर्घट्टितं दीनं, हीनं चङ्क्रमणाक्षमम् ॥ ६१ ॥
गोपान् पप्रच्छ गोपालः, कुत्र स वृषभः ? स तैः [तु] । दर्शितस्तादृशो[शं] भूयस्तं वीक्ष्येदमचिन्तयत् ॥ ६२ ॥
अहो ! भूत्वाऽयं तादृक्षोऽधुना प्राप्तो दशामिमाम् । तदस्यां संसृतौ सर्वेऽनित्या भावा धनादयः ॥ ६३ ॥
जातः प्रत्येकबुद्धोऽसौ, चित्तान्तश्चिन्तयन्निति । लोचं कृत्वाऽग्रहीद् दीक्षां, देवतादत्तलिङ्गभृत् ॥ ६४ ॥
निष्क्रम्य सिंहवृत्त्यैवाऽ प्रतिबद्धसमीरवत् । करकंडवाख्यराजर्षि-र्विजहार वसुन्धराम् ॥ ६४ ॥

उक्तं च—"सेयं सुजायं सुविभत्तसिंगं, जो पासिया वसभं गोट्ठमज्झे ।
रिद्धिं अरिद्धिं समुपेहियाणं, कलिंगराया वि समिक्ख धम्मं ॥ ६५ ॥

इति श्रीमुद्रित-ऋषिमण्डलवृत्तितः उद्धृता श्रीकरकण्डुराजर्षिकथा संपूर्णा.

## ५३ श्री द्विमुखराजर्षिकथा

अस्तीह भरतक्षेत्रे, पुरे काम्पील्यनामनि । श्रीमद्हरिकुलोद्भूतो, यथार्थः पार्थिवो जयः ॥ १ ॥
गुणमालाप्रिया तस्य, गुणमाला प्रियाऽभवत् । निनाय वासरान् राज्यं, भुञ्जानो राट् तया समम् ॥ २ ॥
दूतं स्वाकूतमन्येद्युर्नृपोऽपृच्छत् किमस्ति न । यदस्ति राज्ञामन्येषां ! सोऽवक् चित्रसभा न ते ॥ ३ ॥
ततोऽधिकारिणो राज्ञाऽऽदिष्टास्तां कारयन्तु भोः ।। तदैव तैरथाऽऽरब्धा, राज्ञां कार्यं वचोऽनुगम् ॥ ४ ॥
क्षमायां खन्यमानायां, दृष्टः पञ्चमवासरे । मुकुटः सर्वरत्नाढ्यः, प्रभाभर्त्सितभास्करः ॥ ५ ॥
शिष्टः कर्मकरै राज्ञे, तूर्यवादनपूर्वकम् । उद्धृतोऽसौ ततो भूमे--र्भूभुजा पूजिताश्च ते ॥ ६ ॥
निष्पन्नाऽभ्रंलिहा स्तोक--कालात् चित्रसभा नृपः । सुमुहूर्ते प्रविष्टोऽन्त--र्मङ्गलध्वनिपूर्वकम् ॥ ७ ॥
स दिव्यमुकुटो मूर्द्धिन, धृतः श्रीजयभूभुजा । तस्याऽऽस्यस्यात्र सङ्क्रान्त्या, द्विमुखाऽऽख्यां जनोऽतनोत् ॥८॥
तस्याऽऽसंस्तनयाः सप्त, गुणमाला ममाऽऽत्मजा । नेति चक्रेऽधृति स्त्रीणां, पुत्री प्रायोऽतिवल्लभा ॥ ९ ॥
उपयाचितकं मेने, कामयक्षस्य राज्यथ । कल्पद्रुमञ्जरीस्वप्न--सूचिताऽस्याः सुताऽभवत् ॥ १० ॥
सवर्द्धापनकं नाम, दत्तं मदनमञ्जरी । वर्द्धमानेन्दुलेखेव, साऽभूदुद्यौवनोन्मुखी ॥ ११ ॥
इतश्चोज्जयनीपुर्यां, प्रद्योतश्चण्डशासनः । पार्थिवो बुभुजे राज्यं, दूतोऽग्रेऽस्येदमब्रवीत् ॥ १२ ॥
देव ! दिव्यकिरीटानुभावेन द्विमुखाभिधाम् । जयो राजाऽऽप तत् श्रुत्वा, राज्ञोऽस्योपर्यभूत् स्पृहा ॥ १३ ॥

प्रद्योतः प्राहिणोद् दूतं, स्वाकूतमिव भूभुजे । सोऽप्यागत्याऽऽह ते राजन् !, किरीटं देहि मत्प्रभोः ॥ १४ ॥
मत्प्रभोरेव योग्यं तद्, युद्धसज्जो न चेद् भव । श्रुत्वेति द्विमुखोऽवोचदस्तु तद्वस्तु मे प्रियम् ॥ १५ ॥
गजोऽनलगिरिश्चाग्निभीरू रथः शिवा प्रिया । लोहजङ्घो लेखवाहो, दद्यादेतत् तव प्रभुः ॥ १६ ॥
तद्राज्यसारभूतं तद्, दूतो गत्वाऽऽह तत्समम् । सैन्याटोपेन कोपेन, प्रद्योतः प्राचलत् ततः ॥ १७ ॥
लक्षद्वयं गजेन्द्राणां, रथानामपि तद् द्वयम् । सप्तकोटयः पदातीनां, पञ्चायुतानि वाजिनाम् ॥ १८ ॥
प्रयाणैः सोऽनवच्छिन्नै-रेतावत्सेनयाऽन्वितः । तस्थौ सागरव्यूहेन, सीम्नि पञ्चालनिवृतः ॥१९॥
द्विमुखः सन्मुखं तस्य, प्रतस्थे सर्वसेनया । विस्तार्य गरुडव्यूहं, तस्थौ सीम्नि स्वनीवृतः ॥ २० ॥
लग्नमायोधनं तत्र, सैन्ययोरुभयोरपि । अजय्यो द्विमुखो राजा, तत्किरीटानुभावतः ॥ २१ ॥
भग्नं द्विमुखसैन्येन, प्रद्योतस्याखिलं बलम् । बद्ध्वा पुरान्तरानीतः, प्रद्योतो द्विमुखेन तु ॥ २२ ॥
पादयोर्निगडो दत्तो, धिक् कष्टं परतन्त्रता । पुरान्तर्भ्रमताऽनेन, दृष्टा मदनमञ्जरी ॥ २३ ॥
पञ्चबाणेन बाणेन, विद्धस्तद्दर्शनादसौ । नष्टवि(चि)त्त इव दृष्टः, पृष्टो द्विमुखभूभुजा ॥ २४ ॥
साबाध इव किं राजन् !, वीक्ष्यसे ब्रूहि कारणम् ! । निःश्वस्य दीर्घं प्रद्योतः, कथञ्चिदिदमूचिवान् ॥ २५ ॥
"मयणवसगस्स नरवर !, वाहिविघत्थस्स तह य मत्तस्य । कुवियस्य मरंतस्स य, लज्जा दूरुज्झिया होइ ॥ २६ ॥
तद् यदीच्छसि मे क्षेमं, तदा मदनमञ्जरीम् । राजन् ! देहि न चेदेवं, विशामि ज्वलितानले ॥ २७ ॥
ततस्तन्निर्णयं ज्ञात्वा, द्विमुखोऽदात् निजां कनीम् । प्रद्योतनाय सन्तो हि, प्रार्थनाभङ्गभीरवः ॥ २८ ॥

प्रणिधाय यथास्थानं स्वस्येव द्विमुखो यशः ॥ २९ ॥
तं जामातरमासृत्य, सन्मान्य बहुभक्तिभिः । कुर्वन्तु तदुत्सवम् ॥ ३० ॥
राज्यं पालयतोऽन्येद्युस्तस्यागादुत्सवो हरेः । आदिष्टा नागरा राज्ञा, भोः ! कुर्वन्तु तदुत्सवम् ॥ ३० ॥

चित्रैश्च(विचित्र) चित्रितोऽनेकैरूर्ध्वीचक्रे हरिध्वजः ॥ ३१ ॥
क्लृप्तध्वजपटाटोपस्तै रणत्किङ्किणीगणः । वादका वाद्यामासुर्वाद्यानि मधुरस्वरम् ॥ ३२ ॥
ददुर्दानानि दातारो, जगुर्गीतानि गायनाः । जज्ञे सप्तदिनीमेवं, पुरान्तः प्रवरोत्सवः ॥ ३३ ॥
उल्लेसुरिन्द्रजालानि, चक्रुर्नृत्यानि नर्त्तकाः । फल–प्रसून–वस्त्राद्यैरुद्यद्वाद्यपुरस्सरम् ॥ ३४ ॥
पौर्णमास्यागता यावद्, राज्ञा विच्छर्दितो[विच्छित्तितो]ऽर्चितः । पादैस्तं वीक्ष्याचिन्तयत् नृपः ॥ ३५ ॥
अमेध्य–मूत्रदुर्गन्धं[न्धे], निःश्रीकं पतितं ध्वजम् । मर्द्यमानं जनैः पादैस्तं वीक्ष्याचिन्तयत् नृपः ॥ ३५ ॥
अहो । सर्वेऽप्यमी भावा, ईदृशा एव संसृतौ । धिगस्तु वस्तुतः काम–भोगांस्तान् दुःखदायिनः ॥ ३६ ॥
प्रत्येकबुद्धः शुद्धात्मा, सम्पन्नश्चिन्तयन्निति । प्राव्राजीद् देवतादत्त–लिङ्गो लोचं विधाय च ॥ ३७ ॥

इति श्रीमुद्रित–ऋषीमण्डलवृत्तितः उद्धृता श्री द्विमुखराजर्षिकथा सम्पूर्णः

## ५४ श्री क्षुल्लकमुनिकथा

श्रीसाकेतपुरे क्षोणीवेणीचूडामणीनिभे । राजाऽभूत् पुण्डरीकाक्षः, पुण्डरीकदलेक्षणः ॥ १ ॥
तद्भ्राता कण्डरीकाक्षो, युवराजोऽस्य पत्न्यभूत् । यशोभद्रा यशोभद्रा, सुधाकृतसुधा गिरा ॥ २ ॥
पुण्डरीको नृपोऽद्राक्षीदन्येद्युस्तां रहःस्थिताम् । अनावृताङ्गीं तन्वङ्गीं, रागग्रस्तो बभूव च ॥ ३ ॥

प्रसादनार्थमेतस्याः, प्राहिणोत् प्राभृतं नृपः। ज्येष्ठप्रसाद इत्येषा, निर्विकारा तदाददे ॥ ४ ॥
अन्येद्युः प्रार्थयामास, तां निरस्य त्रपां नृपः। यशोभद्राऽऽह तं राजन्!, न भ्रातुरपि ते त्रपा ? ॥ ५ ॥
ततोऽसौ दुरभिप्रायो, जघान भ्रातरं नृपः। प्रतस्थे सार्थसार्थेन, शीलरक्षाकृते सती ॥ ६ ॥
श्रावस्त्यां पुर्यगादजितसेनाचार्यसद्गुरोः। महत्तराकीर्त्तिमत्याः, पार्श्वे साऽशिश्रियद् व्रतम् ॥ ७ ॥
तदैवोत्पन्नगर्भांशा. व्रतानादानशङ्कया। महत्तराया नाख्याता, चारित्रोत्सुकया तया ॥ ८ ॥
वर्द्धमाने ततो गर्भे, सोपालम्भनपूर्वकम्। सा महत्तरया पृष्टा, पूर्वोत्पन्नं तमाह च ॥ ९ ॥
शासनोड्डाहरक्षार्थं, रक्षिता सा सती रहः। क्षुल्लकुमारनामानं, प्रासूत समये सुतम् ॥ १० ॥
स क्रमाद् यौवनावस्थो, दध्यौ पालयितुं व्रतम्। नैव क्षमोऽस्मि पृच्छामि, भोगार्थी मातरं निजाम् ॥ ११ ॥
मात्राऽनुशासितः सम्यक्, क्षुल्लः स्थातुमनीश्वरः। देहि मे द्वादशाब्दानि, स तया प्रार्थितो ददौ ॥ १२ ॥
ततो द्वादशवर्षान्ते, पुनः पप्रच्छ मातरम्। साऽप्याख्य[वोच]दार्यिकां पृच्छ, तदधीनाऽस्मि यत् सुत ! ॥ १३ ॥
भोगाभिलाषी याम्यस्मि, तेनापृच्छि महत्तरा। ममापि द्वादशाब्दानि, देहीति तान्यसावदात् ॥ १४ ॥
द्वादशद्वादशाब्दान्याचार्योपाध्याययोरपि। वाचैवं तस्थिवानष्टचत्वारिंशत् स वत्सरान् ॥ १५ ॥
गच्छंस्तदन्ते मात्रोक्तो, मा याहीतस्ततः सुत !। पुण्डरीकः पितृव्यस्ते, साकेते तत्र च व्रजेः ॥ १६ ॥
नाममुद्रां पितुः सत्कां, रत्नकम्बलमद्भुतम्। तस्मै ददौ यशोभद्रा, पुत्रप्रेम्णाऽऽर्यिका तदा ॥ १७ ॥
[illegible] सोऽपि, पितृव्यपुरमागमत्। स्थितस्तद्यानशालायां, प्रातर्द्रक्ष्यामि पार्थिवम् ॥ १८ ॥

तदाऽभ्यन्तरपर्षद्यासीत् नाट्यं नाटिकाकृतम् । नटी पश्चिमयामिन्यामीषन्निद्रार्दिताऽभवत् ॥ १९ ॥
निद्रायमाणां तां वीक्ष्य, दध्यौ धैरिकिनी हृदि । तोषिता परिषत् सर्वा, लब्धं बहुतरं धनम् ॥ २० ॥
निद्रातीयं यदीदानीं, भवामो धर्षिता इति । सा सुष्ठु गीतमित्यादि गीतिकामुच्चकैर्जगौ ॥ २१ ॥
तद्यथा—"सुट्ठु गाइयं सुट्ठु वाइयं सुट्ठु णच्चियं सामसुंदरी ! ।
अणुपालिय दीहराइ[ति]या उ सुमिणंतए मा पमायए ॥ १ ॥"
अत्रान्तरेऽर्पितः क्षुल्ल–साधुना रत्नकम्बलः । कुण्डलं युवराजेन, यशोभद्रेण चार्पितम् ॥ २२ ॥
कटको मन्त्रिणाऽदायि, नर्त्तक्यै यतिसन्धिना । हारः श्रीकान्तया सार्थवाह–पत्न्याऽर्पितोऽद्भुतः ॥ २३ ॥
वितीर्णः कर्णपालेन, महामात्रेण चाङ्कुशः । पञ्चकं कम्बलाद्येतत्, लक्षमूल्यं पृथक् पृथक् ॥ २४ ॥
लिख्यते वहिकायां यस्तत्र तुष्यति रुष्यति । स्याद् दानादानयोर्ज्ञानेऽनुग्रहो निग्रहोऽन्यथा ॥ २५ ॥
सर्वेऽपि प्रातराहूताः, किं त्वया रत्नकम्बलः । दत्तः ! क्षुल्लकुमारेति, राज्ञा पृष्टः ससम्भ्रमम् ॥ २६ ॥
स यथा मारितस्तातो, माता नंष्ट्वाऽऽर्यिकाऽभवत् । यावदुद्यौवनोऽत्रागां, भोगार्थीत्यवदत् समम् ॥ २७ ॥
गृहाण पुत्र ! तद् राज्यमित्यूचे पुण्डरीकराट् । सोऽप्याख्यत् तात ! राज्येन सृतं दुर्गतिहेतुना ॥ २८ ॥
मरिष्याम्यचिरादेव, प्रमादोऽल्पकृते हि कः ? । संयमोऽपि पुराऽऽचीर्णो नश्यत्येवर्षिसङ्गजः ॥ २९ ॥
किं कुमार ! त्वया दत्तं, कुण्डलं ? सोऽप्यदोऽवदत् । मारयामि जरद्भूपं, राज्यं दास्यत्यसौ न मे ॥ ३० ॥
तन्निशम्याह भूभर्त्ताऽऽदत्स्व राज्यं ममाऽऽत्मज ! । न कार्यमार्य ! राज्येन, नरकान्तेन सोऽप्यवक् ॥ ३१ ॥

कथं दत्तस्त्वया मन्त्रिन् !, कटकः ? सोऽप्यदोऽवदत् । त्वां मुक्त्वाऽन्यनृपं सेवे, पुराऽऽसीदिति चिन्तितम् ॥३२॥
किं श्रीकान्तेऽर्पितो हारस्त्वयेति साऽऽह मत्पतेः । द्वादशाब्दा गतस्याऽऽसन्नानयमि परं नरम् ॥ ३३ ॥
कथं दत्तः [किमदायि] त्वया सादिन्नङ्कुशः ? सोऽप्यथाब्रवीत् । मारयाऽऽनय वात्रेभं, ज्ञापितं यत् पुरा परैः ॥३४॥
सर्वेऽपि स्वार्थसिद्ध्यर्थं, राज्ञाऽऽदिष्टाः सुतादयः । व्यधुर्निषेधमुद्बुद्धास्ततत्सत्यागाभिलाषतः ॥ ३५ ॥
युवराजादयः सर्वे, वैराग्यादस्तकल्मषाः । क्षुल्लकुमारमार्गेण, तदैवाऽऽददिरे व्रतम् ॥ ३६ ॥
इत्थं क्षुल्लकुमारस्य, निशम्य चरितं हितम् । शुभं भजन्तु भावेन, भो भव्या ! भावमाभनम् ॥ ३७ ॥

इति श्रीमुद्रित-ऋषिमण्डलवृत्तितः उद्धृता क्षुल्लकमुनिकथा संपूर्णा.

## ५५ श्री सुव्रतमहर्षिकथा

सुदर्शनपुरे पूर्वं, शिशुनागो महाधनी । बभूव सुयशानाम्नी, तत्प्रिया प्रेमशालिनी ॥ १ ॥
पितृभ्यां परमप्रीत्या, लाल्यमानः प्रसूनवत् । ज्ञान-विज्ञानवान् जज्ञे, तत्सुतः सुव्रताह्वयः ॥ २ ॥
यौवनं पावनं प्राप, स स्त्रैणगणमोहनम् । क्रमेण कर्मयोगेन, वैराग्यं च महत्तरम् ॥ ३ ॥
सम्बोध्य पितरौ कृच्छ्राद्, जगृहे सुव्रतो व्रतम् । बहुश्रुतस्तथैकत्वविहारप्रतिमामपि ॥ ४ ॥
प्रशशंसान्यदा शक्रस्तं वीक्ष्य प्रतिमास्थितम् । सुरावश्रद्दधानौ द्वौ, पुंरूपावीयतुर्भुवम् ॥ ५ ॥
कुमारब्रह्मचार्येष, धन्य[धर्मी] एकोऽवदत् सुरः । परश्च कुलसन्तान-च्छेदकः पापवानयम् ॥ ६ ॥

तयोर्द्वयोर्वचः श्रुत्वा, नारुषत् नातुषत् मुनिः । तुल्यवृत्तिस्तुलाकोटि-रिवाभूत् किन्तु चेतसा ॥ ७ ॥
ततश्च पितरौ ताभ्यां, दर्शितौ देवमायया । अत्यन्तविषयासक्तौ, तन्मनःक्षोभहेतवे ॥ ८ ॥
दर्शितौ मार्यमाणौ तौ, क्रन्दन्तौ करुणस्वरम् । तथापि सुव्रतमुनिश्चुक्षोभाम्भोधिवन्न च ॥ ९ ॥
वैक्रियविकृतस्त्रीभिः, सविभ्रमविलोकनम् । दिव्याभिर्दीर्घनिःश्वास-पूर्वमालिङ्गितो भृशम् ॥ १० ॥
इत्याद्यैरुपसर्गैर्घैरनुकूलैरसौ मुनिः । ताभ्यां न चालितो ध्यानात्, सुमेरुरिव वात्यया ॥ ११ ॥
किन्तु स्थिरतरोऽत्यर्थं, संयमे सुव्रतोऽभवत् । तदैव केवलज्ञानं, निष्पापः प्राप चामृतम् ॥ १२ ॥

इति श्रीमुद्रित-ऋषिमण्डलप्रकरण वृत्तितः उद्धृता सुव्रतमहर्षिकथा संपूर्णा.

## ५६ कुरगडुमहर्षिप्रबन्धः

कश्चिदुग्रतपाः कस्मिन्, गच्छेऽभूत् क्षपकः पुरा । स क्षुल्लेन सहान्येद्युर्भिक्षार्थमगमत् पुरे ॥ १ ॥
गच्छता तेन मण्डूकी, मार्गे व्यापादिता पदा । तद्वधं क्षुल्लकः प्राह, न मेने क्षपकस्तदा ॥ २ ॥
आलोचयति नाऽऽलोचनावेलायां मुनिस्तु तम् । क्षुल्लकश्चाह तत्पाप-मालोचय शुभाशय ! ॥ ३ ॥
तत् श्रुत्वा क्षपको रुष्टः, क्षुल्लं हन्मीत्यधावत । क्षुल्लोऽपि लब्धलक्षत्वात्, नष्ट्वा दूरं गतो जवात् ॥ ४ ॥
स्तम्भभग्नशिरा मृत्वो-त्पेदे क्रोधान्धविग्रहः । विराधितव्रत-कुले, स फण्येकत्र दृग्विषः ॥ ५ ॥
जानन्ति तेऽहयोऽन्योऽन्यं, जातिस्मृतिवशात् ततः । प्रासुकाहारिणो रात्रि-चारिणो जज्ञिरेऽखिलाः ॥ ६ ॥

इतश्च कस्यचित् राज्ञः, पुत्रो दष्टोऽहिना मृतः । रुष्ट आदिष्टवान् भूपः, सर्पव्यापादनं(ने) जनान् ॥ ७ ॥
तस्मै यच्छामि दीनारं, यो हतं दर्शयत्यहिम् । ततो बहुजनो लग्नस्तद्वधे लोभलीलया ॥ ८ ॥
केनचिद् भ्रमताऽन्येद्यु-रेखास्तेषामिहेक्षिताः । ओ(औ)षधीभिस्ततो दध्मौ, तस्याहेर्निर्दयो बिलम् ॥ ९ ॥
निर्यात्यभिमुखं नाहि-र्मा भूत् मे भस्मसाद् दृशा । निर्गतं निर्गतं छित्त्वा, तं राज्ञेऽदर्शयच्च सः ॥ १० ॥
नागदेवतया भूपो, बोधितो यत् तवाऽऽत्मजः । नागदत्ताह्वयो भावी, देह्यहीनामतोऽभयम् ॥ ११ ॥
मृत्वा क्षपकजीवोऽहि-र्महिष्यास्तस्य भूभुजः । नागदत्ताभिधो जज्ञे, सूनुरन्यूनविग्रहः ॥ १२ ॥
नागदत्तो गवाक्षस्थोऽन्यदाऽतिक्रान्तशैशवः । साधूनालोक्य सस्मार, जाति ह्यःकृतकार्यवत् ॥ १३ ॥
प्रवव्राज गुरूपान्ते, बुभुक्षावानसौ भृशम् । जग्राहाभिग्रहं रोषो, न कार्योऽत्र मया क्वचित् ॥ १४ ॥
सन्त्याचार्यगणे तस्मिंश्चत्वारः क्षपकर्षयः । एक-द्वि-त्रि-चतुर्मासोपवासतपसः क्रमात् ॥ १५ ॥
रजन्यां देवताऽऽयाता, त्यक्त्वा तानखिलान् मुनीन् । ववन्दे क्षुल्लकमुनिं, तमद्वैतक्षमानिधिम् ॥ १६ ॥
निर्गच्छन्ती करे धृत्वा, सोक्तैकेन तपस्विना । रे कटपूतने ! ग्राम्ये !, विवेकविकलाऽसि किम् ? ॥ १७ ॥
महातपस्विनो याऽस्मान्, मुक्त्वा त्रिकालभोजिनम् । वन्दसे पूर्वमेवैनं, सर्वसाध्वव(ध)मं मुनिम् ॥ १८ ॥
देव्युवाच मुने ! भाव-क्षपकं प्रणमाम्यहम् । न द्रव्यसाधुमित्युक्त्वा, सा स्वाश्रयमशिश्रियत् ॥ १९ ॥
क्षुल्लोऽपि कल्यवर्त्तस्य, पात्रं दत्त्वा न्यमन्त्रयत् । मुनीनेकेन निष्ठ्यूतं, तदन्तर्न्यस्तमीर्ष्यया ॥ २० ॥
मिथ्या मे दुष्कृतं खेलमात्रं वो नार्पितं द्रुतम् । तेनेत्युक्तेऽपि(च) निष्ठ्युतं, न्यस्तं तत्राखिलर्षिभिः ॥ २१ ॥

अद्विष्टो भुक्तवान् भक्तं, मुनिभिर्वारितोऽप्यसौ, । अद्वैतक्षान्तिमाहात्म्यात्, केवलज्ञानमाप च ॥ २२ ॥
चत्वारः क्षपकाः सानुतापाः केवलमुज्ज्वलम् । सम्प्रापुरेवं पश्चापि, शिश्रियुस्ते शिवश्रियम् ॥ २३ ॥

इति श्रीमुद्रित--ऋषिमण्डलप्रकरणवृत्तित उद्धृतः कुरगडुमहर्षिप्रबन्धः संपूर्णः

## ५७. श्रीमेतार्यमहर्षिकथा

श्रीसाकेतपुरे चन्द्रावतंसकनृपोऽभवत् । प्रिया सुदर्शना तस्य, तथाऽन्या प्रियदर्शना ॥ १ ॥
सागरचन्द्र-मुनिचन्द्राख्यौ पुत्रौ तथाऽपरौ । गुणचन्द्र-बालचन्द्रौ, जज्ञिरे क्रमशस्तयोः ॥ २ ॥
राजा सागरचन्द्राय, यौवराज्यपदं ददौ । कुमारभुक्तये मुनिचन्द्रायोज्जयिनीं पुरीम् ॥ ३ ॥
कायोत्सर्गेऽन्यदा तस्थौ, माघे राड् वासवेश्मनि । यावद् ज्वलति दीपोऽयं, हृदा कृत्वेत्यभिग्रहम् ॥ ४ ॥
प्राग्यामान्ते प्रभुर्दुःखं, ध्वान्ते स्थातेति भक्तितः । हीयमाने प्रदीपेऽस्मिश्चेटी तैलं न्यधात् पुनः ॥ ५ ॥
यावन्निशीथं जज्वाल, शय्यारक्षाकरी पुनः । निर्वाणाभिमुखे दीपे, तैलं चिक्षेप पूर्ववत् ॥ ६ ॥
एवं यामे तृतीयेऽपि, यावद् रुधिरपूरितः । प्रातः पतित्वा पश्चत्वं, प्राप चन्द्रावतंसकः ॥ ७ ॥
राजा सागरचन्द्रोऽभूदन्यदाऽसौ विमातरम् । प्रोचे सून्वोः कृते राज्यं, गृहाण प्रव्रजाम्यहम् ॥ ८ ॥
अनेन राज्यमाक्रान्तं, क्षमौ नाद्यापि मत्सुतौ । बालत्वादित्यसौ दीयमानं नेच्छति तत् तदा ॥ ९ ॥
ततो राज्यश्रियाऽत्यन्तं दीप्यमानं निरीक्ष्य तम् । सा दध्यौ न मुधाऽनेन, दीयमानं तदाऽऽदृतम् ॥१० ॥

श्रियाऽभविष्यतामेवं, शोभमानौ सुतौ मम । तदिदानीममुं हन्मि, येन स्यादीप्सितं मम ॥ ११ ॥
गवेपयति छिद्राणि, प्रत्यहं प्रियदर्शना । राज्ञः सागरचन्द्रस्य, वधैककृतनिश्चया ॥ १२ ॥
प्रैपीत् सदाय सन्देशं, बुभुक्षावान् नृपोऽन्यदा । कल्यवर्त्तो मम कृते, प्रेष्यः प्रेष्यादिपाणिना ॥ १३ ॥
चेटीहस्तेऽर्पितस्तेन, मोदकः सिंहकेसरः । किमेतदिति पप्रच्छ, सम्भ्रान्ता प्रियदर्शना ॥ १४ ॥
साऽऽह पूर्वाह्निकं राज्ञः, तया(तः) पस्पर्श पाणिना । प्राग् विपाक्तेन तेनासौ, वासितो मोदकोऽभवत् ॥ १५ ॥
अहो ! सुगन्ध इत्युक्त्वा, सा तं चेटीकरे ददौ । तच्चेष्टितमजानाना ढुढौके साऽपि भूभुजे ॥ १६ ॥
विमातृ-तनयौ पार्श्वेऽभूतां दध्यौ ततो नृपः । बुभुक्षिताभ्यामेताभ्यां, कुर्वे पूर्वाह्निकं किमु ? ॥ १७ ॥
द्विधाकृत्य तयोस्तस्यैकैकं खण्डं ददौ नृपः । तदास्वादाद् विषावेगघूर्णितौ तौ बभूवतुः ॥ १८ ॥
सम्भ्रमाद् बहवो(निपुणा) वैद्या, आहूता भूभुजाऽऽययुः । सुवर्णपानयोगेन, सज्जीजातावुभौ क्षणात् ॥ १९ ॥
आहूता पृष्टा सा चेटी, भूभुजा विस्मितात्मना । तयोर्मातृकरस्पर्शं, विचाले प्राह केवलम् ॥ २० ॥
तामाकार्यावदद् देवः, सखेदं प्रियदर्शनाम् । पापेऽनाचीर्णपुण्योऽहं, क्षिप्तोऽभूवमधस्त्वया ॥ २१ ॥
दीयमानं तदा राज्यं, भवत्याऽङ्गीकृतं न किम् ? । तद् गृहाणाधुनेत्युक्त्वा, दत्त्वा प्रव्रजितः स्वयम् ॥ २२ ॥
साधुसङ्घाटकस्तत्रावन्तीतः कश्चिदाययौ । निरुपद्रवतां पृष्टो, मुनीनामिदमभ्यधात् ॥ २३ ॥
साधून् पाखण्डिनश्चापि, पुरोधो-राजनन्दनौ । वाचाटावुच्चाटयतः, केवलं केलिलोलुपौ ॥ २४ ॥
श्रुत्वा सागरचन्द्रर्षिः, सामर्षस्तामगात् पुरीम् । साम्भोगिकानां साधूनामुपाश्रयमशिश्रयत् ॥ २५ ॥

मध्याह्ने तैरसौ पृष्ट–आनयामो भवत्कृते । भक्तमेपोऽब्रवीदात्मलब्धिलब्धोपजीव्यहम् ॥ २६ ॥
दर्शयन्तु परं स्थापनाकुलानि ममर्पयः । ततस्तैः क्षुल्लकस्तस्मै, तद्दर्शनकृतेऽर्पितः ॥ २७ ॥
दर्शयित्वाऽऽस्पदं क्षुल्लो, ववलेऽस्मै पुरोधसः । प्रविश्यान्तरदादुच्चै–र्धर्मलाभमसौ मुनिः ॥ २८ ॥
हाहाकारं वितन्वन्त्योऽन्तःपुर्यो निर्ययुर्बहिः । किमेतत् ? श्राविकाश्चेति, बभाषे मुनिरुच्चकैः ॥ २९ ॥
कुमारावियतुस्तरयोच्चैःस्वराकर्णनादुभौ । कपाटसम्पुटं दत्त्वा, महर्षिरेवमूचतुः ॥ ३० ॥
विधेहि नृत्यं रे मुण्ड !, मुक्त्वा पात्राण्यसावपि । ननर्त्त तौ तु वादित्रवादकौ केवलं जडौ ॥ ३१ ॥
युध्यावहे मुनेऽन्योन्यं, ततो युगपदागतौ । गृहीत्वैकत्र मुनिना, कृतान्यस्थीनि दूरतः ॥ ३२ ॥
मर्मस्थाने भृशं हत्वा, मृतप्रायौ विधाय तौ । ययौ कपाटमुद्घाट्य, वनान्तर्मुनिपुङ्गवः ॥ ३३ ॥
ज्ञातव्यतिकरो राजाऽपृच्छत् तत्र स्थितान् मुनीन् । तेऽवोचन्नतिथिः साधुरेकोऽभूदागतः परम् ॥ ३४ ॥
गवेषयद्भिर्ध्यानस्थो, वनान्तर्मुनिरीक्षितः । राज्ञोपलक्ष्य तं नत्वा, ययाचे सज्जतां तयोः ॥ ३५ ॥
पापावतंस ! रे चन्द्रावतंसकसुतो भवान् । भूत्वाऽपीत्थं मुनीन् बाध्यमानान् स्वैरम्युपेक्षसे ॥ ३६ ॥
वचोभिः कर्कशैः शीतैर्निर्भर्त्स्यैवमनेकधा । मुनिरूचे विना दीक्षां, मोक्षो नैवानयोर्नृप ! ॥ ३७॥
पृष्टौ प्रतिश्रुता दीक्षा, गृहीत्वैकत्र चालिताः । कयाचित् कलया तस्थुः, स्वस्थाने सन्धयस्तयोः ॥ ३८ ॥
बलात् प्रव्राजितौ लोचं, कृत्वा तौ तेन साधुना । पितृव्योऽयं ममेत्येकः, सम्यक् पालयति व्रतम् ॥ ३९ ॥
अहो ! प्रव्राजितौ वाचां, छलेन मुनिनाऽमुना । पुरोहितसुतश्चैवं, सदा हृदि जुगुप्सते ॥ ४० ॥

प्रान्ते सानशनं मृत्वा, देवलोकं गतावुभौ । महाविदेहेष्वर्हन्तं, गतौ तौ पृच्छतोऽन्यदा ॥ ४१ ॥
स्वामिन् ! सुखेन दुःखेन, धर्मं प्राप्स्यति को द्वयोः ? । पुरोहितसुतः स्वामी, प्राह दुर्लभबोधिकः ॥ ४२ ॥
पाश्चात्येन च्युतः पूर्वं, प्रतिबोध्यो यथा तथा । इति तौ सुहृदौ देवौ, प्रतिज्ञां चक्रतुर्मिथः ॥ ४३॥
जीवः पुरोधसः सूनोस्ततश्च्युत्वा स्वकर्मतः । मेत्याः कुक्षौ समुत्पेदे, पुरे राजगृहाह्वये ॥ ४४ ॥
प्रीतिरासीत् समं मेत्या, श्रेष्ठिन्याः साऽभवत् कथम् ? । विक्रीणात्यामिषं निन्द्या, गृह्णाति श्रेष्ठिनी पुनः ॥ ४५ ।
श्रेष्ठिन्या सोदिता मेती, मांसमन्यत्र मा नय । भवत्याः सर्वमप्येतदादास्ये चाहमन्वहम् ॥ ४६॥
सदैवं व्यवहारेण, दृषद्रेखेव निश्चला । अप्यासन्नाऽऽस्पदत्वेन, प्रीतिरासीत् तयोर्मिथः ॥ ४७ ॥
स्वभावात् श्रेष्ठिनी निन्दुर्मेत्या जातः सुतस्ततः । दत्तस्तस्यै मृता तस्याः । सुताऽऽत्मनाऽददे तया ॥ ४८ ॥
श्रेष्ठिनी पादयोर्मेत्यास्तं पातयति नन्दनम् । भवत्या जीवितः(त्वतु) शिशुः, प्रसादेनेति वादिनी ॥४९ ॥
श्रेष्ठिन्या लालितोऽत्यन्तं, मेतार्य इति नामतः । ववृधेऽसौ सुधासेकात्, मन्दार इव मन्दरे ॥ ५० ॥
सोऽग्रहीदल्पकालेन, कलाचार्यान्तिके कलाः । बोध्यमानोऽपि देवेन, तेन नैवैष बुध्यते ॥ ५१ ॥
तदर्थमर्थिताः पित्राऽथेभ्यानामष्ट कन्यकाः । सोऽभ्रमत् शिबिकारूढो, जातपाणिग्रहोत्सवः ॥ ५२ ॥
तेन देवेन मातङ्गोऽधिष्ठितोऽरुददुच्चकैः । चेत् सुता मे मृता नाभूदकरिष्यं तदुत्सवम् ॥ ५३ ॥
ततो व्यतिकरो मेत्या, मेतस्य' कथितोऽखिलः । यथाऽयमावयोः सूनुर्विज्ञेयो भवता प्रिय ! ॥ ५४ ॥

करोष्यसदृशं रे रे ! त्वं सम्बन्धं ब्रुवन्निति । चिक्षेपोत्पाट्य मातङ्ग(ङ्गो) गर्त्तायां सहसा स तम् [तकम्] ॥५५॥
आविर्भूयावदद् देवो, बोध्यमानो न बुध्यसे । किमिदानीमिवैषोऽपि, बभाषे दीनवागिदम् ॥ ५६ ॥
वयस्यावर्णवादो मे, हीनजात्युद्भवः पुनः । निवारय परिव्रज्यामादास्येऽल्पदिनैस्ततः ॥ ५७ ॥
स कथं यात्यनेनोक्ते, मेतार्यो भाषते सुहृत् । राजकन्याविवाहेन, यात्यसौ नान्यथा पुनः ॥ ५८ ॥
ततश्छगलकस्तस्मै, दत्तो रत्नपुरीषकृत् । तत्पितोपायनीचक्रे, तानि रत्नानि भूभुजे ॥ ५९ ॥
पृष्टः श्रेणिकराज्ञाऽसावुपायनप्रयोजनम् । प्राह राजन् ! निजां कन्यां, प्रदेहि मम सूनवे ॥ ६० ॥
निषिद्धोऽपि पुनस्तानि, रत्नानि नृपतेरदात् । रत्नानिस्ते कुतस्त्येति, पृष्टो मेतोऽब्रवीदजम् ॥ ६१ ॥
बद्धो राजगृहे छागो, दुर्गन्धममुचत् शकृत् । ततो दिव्यानुभावोऽयमिति प्रत्यर्पितोऽस्य सः ॥ ६२ ॥
कुर्वत्युपायनं तस्मिन्, पुनर्मन्त्र्यभयोऽवदत् । भो ! दुःखं याति वैभार–गिरौ नन्तुं प्रभुं नृपः ॥ ६३ ॥
निष्पादय रथारोह–पद्यां सद्यः स्वसिद्धये । देवेन तत्क्षणादेव, सा कृताऽचिन्त्यशक्तिना ॥ ६४ ॥
साऽद्यापि दृश्यते शालः, सौवर्णः कारितः पुरे । मन्त्रिणोक्तः पुनर्मेतो, भो ! अत्रानय वारिधिम् ॥ ६५ ॥
तत्र स्नातस्य शुद्धस्य, यच्छामस्ते कनीं निजाम् । आनीतोऽम्भोनिधिरसौ, वेलायां स्नापितः शुचिः ॥ ६६ ॥
विवाहं कारितो याप्ययानारूढोऽभ्रमत् पुरम् । आनीतास्ताः स्त्रियो भोगान्, भुङ्क्तेऽसौ नवभिः सह ॥ ६७ ॥
समेत्य द्वादशाब्दान्ते, सुरो मेतार्यमब्रवीत् । व्रतार्थं प्रार्थितः स्त्रीभिर्द्वादशाब्दान्यदात् पुनः ॥ ६८ ॥
चतुर्विंशतिवर्षान्ते, सर्वेऽपि प्राव्रजंस्ततः । नवपूर्वविदेकत्वप्रतिमामाददे मुनिः ॥ ६९ ॥

पुरेऽस्मिन् विहरन् सोऽगात्, स्वर्णकृद्गृहमन्यदा । स श्रेणिकजिनार्चार्थं, कुरुते काञ्चनान् यवान् ॥ ७० ॥
त्रिसन्ध्यं परिपाट्याऽर्चत्यर्हन्तं राड् यवैर्नवैः । अष्टोत्तरशतैस्ते तु, तेन निष्पादितास्तदा ॥ ७१ ॥
भिक्षा तदर्थं नानीतोदिते स्वर्णकृताऽपि हि । तदर्थं प्राविशद् वेश्माभ्यन्तरं स्वर्णकृत् स्वयम् ॥ ७२ ॥
गलितास्ते यवभ्रान्त्या, काञ्चनाः क्रौञ्चपक्षिणा । पप्रच्छ बहिरायातस्तत्सम्बन्धमसौ मुनिम् ॥ ७३ ॥
त्वया परेण वा केन, वदर्षे ! मे यवा हृताः ? । स तत्करुणया जानन्नप्याचष्टे न किञ्चन ॥ ७४ ॥
राज्ञोऽर्चावसरो जज्ञेऽद्यास्थिखण्डान्यहं क्रिये । इति भीत्या स पप्रच्छ, मुनिरूचे न तत् पुनः ॥ ७५ ॥
ततो रुपाऽऽर्द्रवाद्ध्रेण, शीर्षावेष्टोऽर्पितो मुनेः । तथा यथा दृशोर्गोलौ, निर्गत्य पतितौ भुवि ॥ ७६ ॥
निश्चलात्मा महात्माऽसौ, ध्यानात् नाप्यचलत् तथा । अन्तकृत्केवली भूत्वा, सिद्धिसौधाग्रमाप च ॥ ७७ ॥
स्फोटथमानादथो काष्ठादेकं खण्डं गलेऽलगत् । क्रौञ्चस्योत्पत्य ते तेनाखिला वान्ता यवा भिया ॥ ७८ ॥
हाहाकारपराः पौरा, मृतं तं वीक्ष्य चाक्षतान् । यवानाचुक्रुशुः पाप्मन् !, स्वर्णकृत् ! किं कृतं त्वया ? ॥ ७९ ॥
दधाविरे वधायास्य, ज्ञातव्यतिकरा नराः । उपाददे सतन्त्रोऽसावनन्योपायतो व्रतम् ॥ ८० ॥
धर्मलाभं कलादोऽदाद्, राज्ञे स्मित्वा नृपोऽवदत् । क्वथिष्यसे कटाहे रे !, चेत् त्यक्ष्यसि व्रतं क्वचित् ॥८१॥
इत्थं मेतार्यवत् कार्यमार्यैर्ध्यानस्थिरं मनः । शश्वदानन्दगाकन्दकन्दलोद्भेदसिद्धये ॥ ८२ ॥

इति श्रीमुद्रित–ऋषिमण्डलवृत्तितः उद्धृता श्रीमेतार्यमहर्षिकथा संपूर्णा

## ५८ श्री इलापुत्रकथा

कस्मिंश्चिदेको ग्रामेऽभूद्, द्विजो धर्मं निशम्य सः । चारित्रं सद्गुरोरन्ते, सकलत्रोऽप्युपाददे ॥ १ ॥
तेपाते तौ तपस्तीव्रं, परं प्रेम मिथो महत् । विचिकित्सां ब्राह्मणीति, चक्रे स्त्रीशूद्रसङ्गजाम् ॥ २ ॥
मृत्वोत्पन्नावुभौ देवौ, तदनालोचितागसौ । इतश्च भारतेऽत्रैवाभूदिलावर्द्धनं पुरम् ॥ ३ ॥
तत्रेलानामतः साति-शया देव्यस्ति विश्रुता । तां सेवतेतरामेका, सार्थवाही सुतार्थिनी ॥ ४ ॥
कुक्षौ तस्यास्ततश्च्युत्वोत्पेदे जीवो द्विजन्मनः । इलापुत्र इति नाम, कृतमुत्सवपूर्वकम् ॥ ५ ॥
ब्राह्मण्यभूद् विचिकित्सा-वशात् लङ्खकुले सुता । द्वावप्युद्यौवनं प्राप्तौ, मन्मथद्रुमदोहदम् ॥ ६ ॥
लङ्खपुत्रीमिलापुत्रो, नृत्यन्तीमन्यदैक्षत । प्राग्भवप्रेमतस्तस्यां, भृशं रागार्दितोऽभवत् ॥ ७ ॥
सुहृद्भिः प्रार्थिता साऽस्य, लङ्खमुख्यास्ततोऽवदन् । यच्छामः कथमप्येनां, नाक्षयो निधिरेव नः ॥ ८ ॥
चेद् विद्यां शिक्ष्य(क्ष)तेऽस्माकं, साकं भ्रमति चैष नः । तदैनां लभते स्वर्ण-तोलितामपि नान्यथा ॥ ९ ॥
ततः कर्मवशाद् रागात्, स्वीचक्रे तदिलासुतः । श्रेष्ठं श्रेष्ठिकुलं त्यक्त्वा, तन्निषेवेऽधमं कुलम् ॥ १० ।
तद्विद्यां शिक्षितः सम्यग्, विवाहायार्जितुं धनम् । वेन्नातटपुरं प्राप्तो, ययाचेऽवसरं नृपात् ॥ ११ ॥
दत्त्वावसरमेतस्मै, स्वान्तःपुरपरीवृतः । राजा सनागरोऽद्राक्षीत्, तत्कृतं नाट्यमीदृशम् ॥ १२ ॥
पूर्वमूर्ध्वीकृतस्तत्र, महान् वंशोऽस्य चोपरि । फलकं प्रान्तयोस्तस्य, द्वौ द्वौ स्तो लोहकीलकौ ॥ १३ ॥

मूलच्छिद्रयुतोपानद्द्वयं परिदधात्यथ ॥ १४ ॥
फलकान्तरसौ स्थित्वा, हस्तोपात्तासि–खेटकः । उत्पत्योत्पत्य गगनेऽप्रमत्तः किरणान्यदात् ॥ १५ ॥
ससाग्रतोमुखान्युच्चैः, सप्त पश्चान्मुखान्यपि । कथञ्चित् पतति ततश्चेद् याति शतखण्डताम् ॥ १६ ॥
पादुकाच्छिद्रयोरन्तः प्रवेशयति कीलकौ । अदातरि परं राज्ञि, पूर्वं नो कश्चिदप्यदात् ॥ १७ ॥
सर्वे दानोन्मुखास्तस्य, रञ्जिताः कलयाऽभवन् । अद्वैतरूपां तां वीक्ष्य, नृपो रागार्दितोऽभवत् ॥ १८ ॥
सा गीतं गाथकीवृन्दधृता गायति मुस्वरम् । एवं द्वि–त्रि–चतुर्वारं, कृतं तेन कलावता ॥ १९ ॥
राजाऽऽहोत्पतनं नैव, दृष्टं भोः ! कुरु तत् पुनः । पश्चात् परिणयाम्येनामिति दध्यौ नृपो हृदि ॥ २० ॥
परं लङ्खसुतारक्तो, म्रियते चेत् पतत्ययम् । दध्यौ नटो मां कन्यार्थं, मृतमिच्छति राड् ध्रुवम् ॥ २१ ॥
साधुकारः कृतो लोकैरदातरि नृपे ततः । स्त्रीभिरद्भुतरूपाभिर्दीयमानोदनान् मुनीन् ॥ २२ ॥
इतश्चेलासुतोऽद्राक्षीद्, वंशस्थो धनिनां गृहे । तद्वीक्ष्याचिन्तयदसौ, दुष्कर्मावरणक्षयात् ॥ २३ ॥
तद्रूपादौ परं तेषां, न मनः किन्तु भक्तगम् । धिङ् मां केयमवस्था मे, कुलीनस्याकुले स्थितिः ॥ २४ ॥
अहो ! निःस्पृहताऽमीषां, नीरागाणां महात्मनाम् । लेभे ज्ञानमिलापुत्रो, योगस्याहो ! विशिष्टता ॥ २५ ॥
शुभध्यानवशादेवं, वंशाग्रस्थोऽपि केवलम् । लेभिरे केवलज्ञानं, लिङ्गं च देवतार्पितम् ॥ २६ ॥
लङ्खपुत्री नृपो राज्ञी, त्रयोऽप्येवं विरागतः । भविकान् बोधयामास, तत्रस्थान् धर्मदेशनात् ॥ २७ ॥
स्वर्णाम्बुजीभूतवंशोपरि तिष्ठन्निलासुतः ।

इति श्रीमुद्रित–ऋषिमण्डलवृत्तितः उद्धृता श्री इलापुत्रकथा संपूर्णा.

# ५९ श्री चिलातीपुत्रकथा

क्षितिप्रतिष्ठिते द्रङ्गे, यज्ञदेवाभिधो द्विजः । एकोऽभूत् पण्डितंमन्यो, जिनशासननिन्दकः ॥ १ ॥
सोऽन्यदा निर्जितो वादे, गुरुभिर्व्रतमग्रहीत् । देवताबोधितस्यास्य, सम्यक् परिणतं च तत् ॥ २ ॥
परं त्यजेद् जुगुप्सां नोपशान्तः स्वजनोऽखिलः । प्रियाऽदात् कार्मणं(णां)प्रेम्णा, तस्मै वश्यो ममास्त्विति ॥ ३ ॥
ततो मृत्वा सुरो जज्ञे, साऽपि निर्वेदतो व्रतम् । लात्वाऽनालोचिता चैव, मृत्वोत्पन्ना सुरालये ॥ ४ ॥
इतश्च धननामाऽऽसीत् श्रेष्ठी राजगृहे पुरे । चिलात्याख्या मुख्यचेटी, चेटीकोटीषु विश्रुता ॥ ५ ॥
तस्याः कुक्षौ ततश्च्युत्वोत्पेदे जीवो द्विजस्य सः । जुगुप्सातोऽभिधा तस्य, चिलातीपुत्र इत्यभूत् ॥ ६ ॥
तत्रैव श्रेष्ठिनः पञ्चपुत्रोपरि दिवश्च्युता । स एव ब्राह्मणीजीवः सुंसुमाख्याऽभवत् कनी ॥ ७ ॥
चेटीसुतः स एवास्याः, कल्पितो बालधारकः । कुचेष्टां श्रेष्ठिना दृष्टः, कुर्वाणोऽस्या भगादिषु ॥ ८ ॥
निर्वासितो ह्ययोग्यत्वात् पल्लीं सिंहगुहां गतः । सुभगत्वात् निजोपान्ते, पल्लीनाथेन रक्षितः ॥ ९ ॥
पल्लीशोऽभूत् मृते तस्मिन् निस्त्रिंशोऽग्रप्रहार्यसौ । प्रोक्तास्तेनाऽऽत्मनश्चौरा, यामो राजगृहं पुरम् ॥ १० ॥
धनश्रेष्ठिश्रियस्तत्र, युष्माकं मम सुंसुमा । ततो पतन्नकस्मात् ते, रात्रौ तच्छ्रेष्ठिनो गृहे ॥ ११ ॥
दत्त्वाऽवस्वापिनीं तेषां, तद्धनं सुंसुमां च ते । आदाय कथयित्वा स्वं, प्रति पल्लीं प्रतस्थिरे ॥ १२ ॥
आरक्षकान् धनोऽवोचद्, युष्माकं वालितं धनम् । कन्या ममेति तत्पृष्ठे, सपुत्रस्तैरधावत ॥ १३ ॥

भयाश्चौरा धनं मुक्तं, तज्ज्ञात्वा वलिताः परे । सपुत्रोऽप्यन्वगात् श्रेष्ठी, पल्लीशं सुंसुमान्वितम् ॥ १४ ॥
नासौ शक्नोति तां वोढुमासन्नोऽभूद् धनस्ततः । छित्वा कन्याशिरो रागात्, तदादायाग्रतोऽचलत् ॥ १५ ॥
निराशो घवले श्रेष्ठी, मध्याह्ने तान् क्षुधाऽर्दितान् । तनयानाह हत्वा मां, कुर्वन्त्वाहारमात्मनः ॥ १६ ॥
न कुर्मोऽकृत्यमीदृक्षं, ज्येष्ठोऽवग् घ्नन्तु मां परम् । एवं यावत् कनिष्ठोऽपि प्राहै(ह)ते मेनिरे न तत् ॥ १७ ॥
ततो धनोऽब्रवीदग्रः, सर्वे त्यक्त्वा सुतापलम् । तत् तैराहारितं भोगभुजोऽभवन् गता गृहम् ॥ १८ ॥
एवं मुनिभिराहार, आहार्यो गाढकारणैः(णे) । तन्मांसवदनिर्वाहे, मोक्षौकः प्रापकः क्रमात् ॥ १९॥
दिङ्मूढः पल्लीनाथोऽभूद्, गच्छन् कन्याशिरःकरः । मूर्त्तं धर्ममिवाद्राक्षीत्, मुनिमातापनापरम् ॥ २० ॥
ब्रूहि धर्मं न चेत् छेत्स्ये, तवाऽऽकृष्टासिना शिरः । उपशम-विवेक-संवर इत्यब्रवीत् मुनिः ॥ २१ ॥
तत् श्रुत्वाऽचिन्तयत् चौरः, सत्यवाचो महर्षयः । कस्तत्रोपशमादीनां, भावार्थो ? ज्ञातवान् स्वयम् ॥ २२ ॥
क्रोधत्यागो भवेत् तत्रो--पशमश्च विवेकता । स्वस्वादिवर्जनं त्यक्तस्तेनासिश्च कनीशिरः ॥ २३ ॥
इन्द्रिय-नोइन्द्रिययोर्गुप्तिः स्यात् संवरः पुनः । एतत् पदत्रयं ध्यायंस्तस्थौ गतिमया स्थिरः ॥ २४ ॥
ईयुः शोणितगन्धेन, वज्रतुण्डाः पिपीलिकाः । भक्षयन्ति स्म तस्याङ्गं, ध्यानस्थस्य महात्मनः ॥ २५ ॥
प्रविश्य पादयोर्देहं, भित्त्वा शिरसि निर्ययुः । चालनीव लसच्छिद्रं, तस्य ताभिः कृतं वपुः ॥ २६ ॥
कर्मक्षयोपकारिण्यो, ममैता इत्यसौ स्मरन् । न द्वेषमीपदप्यन्तर्वबन्धैतासु तत्त्ववित् ॥ २७ ॥

विषह्यार्द्धतृतीयाहमुपसर्गं तदुद्भवम् । शुभध्यानादसौ मृत्वोत्पेदे त्रिविष्टपेऽष्टमे ॥ २८ ॥

इति श्रीमुद्रित-ऋषीमण्डलवृत्तितः उद्धृता श्री चिलातीपुत्रकथा

## ६० श्री मृगापुत्रकथा

सुग्रीवाख्य[ख्ये]पुरे राजा, बलभद्राभिधोऽभवत् । तत्प्रेमकन्दलोद्भेदाम्भोदाऽग्रमहिषी मृगा ॥ १ ॥
तस्याः सूनुर्मृगापुत्रो, यौवराज्यश्रियं श्रयन् । स्त्रीभिः क्रीडति दिव्याभिर्दोगुन्दुक इवान्वहम् ॥ २ ॥
अन्येद्युर्नन्दनावासगवाक्षस्थो मृगात्मजः । पुरमालोकयत्युच्चैश्चतुष्क-त्रिक-चत्वरम् ॥ ३ ॥
भ्रमन्तं मुनिमद्राक्षीत्, तत्रैकं सद्गुणाकरम् । स दध्यावीदृशं रूपं, प्राक् किं क्वाप्यस्मि दृष्टवान् ? ॥ ४ ॥
निर्निमेषं तदालोकात्, मृगासूर्जातिमस्मरत् । देवलोकाद् यथा च्युत्वा, मानुष्यं भवमागतः ॥ ५ ॥
विषयेष्वरजन् सम्यग्, वैराग्यात् संयमे रजन् । माता-पितृनुपेत्यैवं, बलभद्रात्मजोऽवदत् ॥ ६ ॥
मया स्मृतानि पश्चापि, व्रतानि नरके व्यथाः । यच्छतं मे व्रतानुज्ञां, निर्विण्णोऽस्म्यमुतो भवात् ॥ ७ ॥
तात ! मातर्मया भोगा, भुक्ता विषफलोपमाः । प्रान्ते कटुविपाकास्तेऽनुबन्धा दुःखदायिनः ॥ ८ ॥
तथाऽनित्यमिदं देहमशुच्यशुचिसम्भवम् । न फेनबुद्बुदौपम्ये, प्राप्नोम्यस्मिन् भवे रतिम् ॥ ९ ॥
असारेऽस्मिन् मनुष्यत्वे, ग्रस्ते मृत्युजराऽऽदिभिः । बहुव्याधिजरा(रुजाऽऽ)कीर्णे, न लभेयं रतिं ततः ॥ १० ॥
क्षेत्रं वास्तु हिरण्यं च, पुत्रान् दारांश्च बान्धवान् । त्यक्त्वाऽवश्यमवशेन, गन्तव्यमखिलं मया ॥ ११ ॥

क्षुधा–तृष्णाऽभिपीडितः ॥ १२ ॥
तथा महान्तमध्वानं, योऽपाथेयः प्रपद्यते । दुःखी भवत्यसौ गच्छन्, क्षुधा–तृष्णाविवर्जितः ॥ १३ ॥
यस्तु महान्तमध्वानं, सपाथेयः प्रपद्यते । सुखी भवत्यसौ गच्छन्, क्षुधा–तृष्णाविवर्जितः ॥ १३ ॥
याति धर्ममकृत्वैवं, योऽमुत्र सोऽसुखी भवेत् । कृत्वा धर्मं पुनर्याति, सोऽल्पकर्मा सुखी भवेत् ॥ १४ ॥
स्यात् प्रदीप्ते[प्तं]यथा गेहे, तस्य यस्तु पतिर्भवेत् [भवेत्पतिः] । उद्धरेत् सारभाण्डानि, निस्सारं सर्वमुज्झति ॥१५॥
एवं लोके प्रदीप्तेऽस्मिन्, जरया मरणेन च । आत्मानं तारयिष्यामि, संसाराद् युष्मदाज्ञया ॥ १६ ॥
तं माता–पितरोऽवोचन्, श्रामण्यं पुत्र ! दुश्चरम् । गुणानां तु सहस्राणि, धार्याणि स्युर्महर्षिभिः ॥ १७ ॥
समता सर्वभूतेषु, तत्र मित्रेषु शत्रुषु । प्राणातिपातविरतिः, कर्त्तव्याऽत्यर्थमाभवम् ॥ १८ ॥
सर्वदाऽप्यप्रमत्तेन, मृषावादविवर्जनम् । सत्यं वाच्यं न चादत्तमुपादेयं तृणाद्यपि ॥ १९ ॥
ब्रह्मचर्यं त्रिधा धार्यं, स्मार्या नार्या न सङ्गमाः । धन–धान्य–हिरण्यादिर्वर्जनीयः परिग्रहः ॥ २० ॥
रात्रौ चतुर्विधाहारस्त्याज्यो धार्यो न सन्निधिः । सर्वारम्भपरित्यागो, ममताऽत्र न कुत्रचित् ॥ २१ ॥
क्षुत्–तृष्णा–दंश–मशक–शीतोष्णाद्याः परीषहाः । दुश्चरा याचनावृत्तिलब्धशुद्धान्नभोजनम् ॥ २२ ॥
कापोतीया पुनर्वृत्तिः, कचलोचोऽति दुश्चरः । यावज्जीवमविश्रामो, धार्यो गुणभरोऽन्वहम् ॥ २३ ॥
व्योमगङ्गाप्रतीपोग्रस्रोतोवद् दुस्तरो भृशम् । बाहुभ्यां सागर इव, तरितव्यो गुणोदधिः ॥ २४ ॥
बालुकाकवलाहारनिरास्वादेऽत्र संयमे । एकान्तदृष्टयाऽहिरिवासिधारागमनं भवेत् ॥ २५ ॥
चर्वयितव्या मदनदन्तैर्लोहमया यवाः । यथा चाग्निशिखा दीप्ता, पातुं भवति दुष्करा ॥ २६ ॥

यथा तोलयितुं मेरुस्तुलया दुष्करो भवेत् । श्रामण्यं खलु तारुण्ये, कर्तुं स्याद् दुष्करं तथा ॥ २७ ॥ युग्मम् ॥
भुङ्क्ष्व मानुष्यकान् भोगान्, शब्दादीन् पञ्चधा चिरम् । भुक्तभोगस्ततो जाताऽवसरे त्वं चरेर्व्रतम् ॥ २८ ॥
स माता-पितरावूचे, सत्यमेतद् यथोदितम् । इहलोके निष्पिपासस्य, किञ्चिदस्ति न दुष्करम् ॥ २९ ॥
मनोजा देहजाः सोढा, अनन्ता वेदना मया । दुःखखानौ भवेऽमुष्मिन्, जन्म-मृत्यु-जराऽऽकुले ॥ ३० ॥
यथेह महदुष्णत्वं, स्फीतं शीतं तथाऽत्र नु । ततोऽनन्तगुणं तातानुभूतं नरकेषु तत् ॥ ३१ ॥
पक्वोऽस्मि कु[क]न्दुकुम्भ्यग्रावूर्ध्वपादस्त्वधःशिराः । दग्धो दवाग्नितुल्यासु कदम्बवालुकास्वहम् ॥ ३२ ॥
उर्ध्वं बद्ध्वाऽधमैश्छिन्नोऽनेकधा क्रकचादिभिः । खिन्नस्तीक्ष्णाग्रसम्बलिद्रोः(द्रौ) कर्षणापकर्षणैः ॥ ३३ ॥
इक्षुवत् पीडितोऽत्यर्थं, महायन्त्रेषु चाऽऽरटन् । पातितः पाटितश्छिन्नः, कूजन् कोल-श्वभिः सुरैः ॥ ३४ ॥
नियोज्य ज्वलदग्न्याभे तोत्रैर्लोहरथेऽर्दितः । असिभिश्चातसीवर्णैश्छिन्नो भिन्नश्च पट्टिशैः ॥ ३५ ॥
ज्वलज्ज्वलनचित्यासु, दग्धो महिषवद् भृशम् । विलुप्तो ढङ्क-गृध्राद्यैर्लोहतीक्ष्णाननैर्विभिः ॥ ३६ ॥
तृषार्त्तः क्षुरधाराभिर्गतो वैतरणीं हतः । प्राप्तोऽसिपत्रं[यन्त्र] तापार्त्तः, पतद्भिः खण्डितो दलैः ॥ ३७ ॥
मुद्गरैर्मुशलैः शूलैर्भग्नाङ्गोऽनेकधाऽभवम् । उत्कृत्तः कल्पितस्तीक्ष्णधाराग्रैः कल्पनी[कर्त्तरी]क्षुरैः ॥ ३८ ॥
पाशैर्जालैर्मृग इव, बद्धो रुद्धश्च बाधितः । मकरैर्बडिशैर्जालैर्मत्स्यवत् पाटितो हतः ॥ ३९ ॥
व्याधाभैर्वज्रलेपाद्यैर्गृहीतपक्षिवद् ह(धृ)तः । कुठाराद्यैर्द्रुम इव, छिन्न-पाटित-कुट्टितः ॥ ४० ॥
दृढैश्चपेटा-मुष्ट्याद्यैश्चूर्णितो लोहवद् घनैः । तप्तायस्त्रपु-ताम्राणि, तृषार्त्तः पायितो बलात् ॥ ४१ ॥

मांसं तेऽभूत् प्रियं पूर्वं, स्वमांसमिति खादितः । स्मारयित्वा सुरां चैव, वसा-रक्तानि पायितः ॥ ४२ ॥
एवं नानाविधास्तीव्राः, परमाधार्मिकैः कृताः । सोढा मयाऽतिभीतेन, वेदना नरकेऽन्वहम् ॥ ४३ ॥
मनुष्यलोके यादृक्षा, दृश्यन्ते तीव्रवेदनाः । ताभ्योऽनन्तगुणास्तातानुभूता नरके तु (तु) ताः ॥ ४४ ॥
एवं भवेषु सर्वेष्वनुभूता वेदना मया । सुखोचितत्वं किं तस्य, प्रव्रज्या दुष्कराऽथवा ॥ ४५ ॥
पितरावूचतुस्तं तु, प्रव्रज स्वेच्छयाऽऽत्मज ! । निष्प्रतिकर्मता तत्र, श्रामण्यं दुष्करं परम् ॥ ४६ ॥
सोऽवोचदेवमेवैतत्, पितृभ्यां यदिहोदितम् । प्रतिकर्म परं कोऽत्र, कुरुते मृग-पक्षिणाम् ? ॥ ४७ ॥
एकभूतो यथाऽरण्ये, चरति स्वेच्छया मृगः । तथा धर्मं चरिष्यामि, तपसा संयमेन च ॥ ४८ ॥
स्यात् मृगस्य यदातङ्को, महारण्ये प्रजायते । तिष्ठन्तं तरुमूलेषु, कश्चैनं हि चिकित्सति ? ॥ ४९ ॥
को वा तस्यौषधं दत्ते ?, सुखं पृच्छति चा(वाऽ)स्य कः ? । भक्तं वा कोऽस्य पानं वा, समानीय समर्पयेत् ? ॥५०॥
यदा सुखी भवत्येष, तदा गच्छति गोचरम् । स्वेच्छया भक्तपानार्थं, वल्लरेषु सरस्सु च ॥ ५१ ॥
पीत्वाऽम्भो भक्ष्यमास्वाद्य, सरस्सु वल्लरेषु च । मृगचर्यां चरित्वा च, याति स्वाश्रयभूमिकाम् ॥ ५२ ॥
एवं समुत्थितो भिक्षुरूर्ध्वं गच्छत्यनेकगः । मृगवत् मुनिरप्येवं, निन्देद् भक्ष्यं न कर्हिचित् ॥ ५३ ॥
मृगचर्यां चरिष्यामि, पुत्रैवं ते यथासुखम् । पितृभ्यामित्यनुज्ञातस्त्यक्तवानुपधिं ततः ॥ ५४ ॥
स माता-पितरावेवमनुज्ञाप्य महाग्रहात् । तत्याज ममतां तावत्, महाहिरिव कञ्चुकम् ॥ ५५ ॥
ऋद्धिं वित्तं सुतान् दारान्, ज्ञातीन् मित्राणि सद्म च । स रजोवत् पटे लग्नं, निर्द्धूयोपाददे व्रतम् ॥ ५६ ॥

त्रिगुप्तः पञ्चसमितः, पञ्चमहाव्रतान्वितः । बाह्यान्तरभेदभिन्ने, तपःकर्मणि चोद्यतः ॥ ५७ ॥
निर्ममो निरहङ्कारो, निस्सङ्गस्त्यक्तगा[गौ]रवः । समश्च सर्वभूतेषु, त्रसेषु स्थावरेषु च ॥ ५८ ॥
लाभालाभे सुखे दुखे, जीविते मरणे तथा । समो निन्दा-प्रशंसासु, तथा मानापमानयोः ॥ ५९ ॥
गा(गौ)रवेषु कषायेषु, दण्ड-शल्य-भयेषु च । निवृत्तो हास(स्य)-शोकाभ्यामनिदानोऽप्यबन्धनः ॥ ६
इह लोके परलोके, विरागत्वादनिश्रितः । वासी-चन्दनकल्पश्चानशनेऽप्यशने तथा ॥ ६१ ॥
ज्ञानेन चरणेनैवं, तपसा दर्शनेन च । सद्भावनाभिरात्मानं, वासयित्वा समं ततः ॥ ६२ ॥
ततो बहूनि वर्षाण्याराध्य श्रामण्यमुत्तमम् । अर्द्धमासोपवासेन, मृगापुत्रो ययौ शिवम् ॥ ६३ ॥
उत्तराध्ययनैकोनविंशत्यध्ययनानुगः । सम्बन्धोऽयं मृगासूनोः, सङ्क्षेपाद् दर्शितो मया ॥ ६४ ॥

इति श्रीमुद्रित-ऋषिमण्डलवृत्तितः उद्धृता **श्रीमृगापुत्रकथा संपूर्णा.**

## ६१ श्री जिनदेवर्षिकथा

अर्हन्मित्रोऽभवत् श्रेष्ठी, द्वारवत्यामुपासकः । अनुद्धरीति तत्पत्नी, जिनदेवाह्वयः सुतः ॥ १ ॥
अन्येद्युरुग्ररोगेण, ग्रस्तोऽभूद् जिनदेवकः । वैद्यैर्विनाऽऽमिषं व्याधेर्न शान्तिरिति भाषितः ॥ २ ॥
पितृभ्यामपि रागेण, तदर्थमुदितस्तु सः । चक्रे नियमभङ्गं नो, प्रत्युतैवं व्यचिन्तयत् ॥ ३ ॥
“वरं प्रवेष्टुं ज्वलितं हुताशनं, न चापि भग्नं चिरसञ्चितं व्रतम् ।

वरं हि मृत्युः सुविशुद्धकर्मणो, न चापि शीलस्खलितस्य जीवितम् ॥ ४ ॥"

म्रियेऽहमिति सञ्चिन्त्य, दुस्साध्यव्याधिबाधया । प्रत्याचख्यौ स्वयं सर्वं, सावद्यं श्रेष्ठिनन्दनः ॥ ५ ॥
कदञ्चित् प्रगुणः कर्मक्षयोपशमतोऽभवत् । पुण्यमेकं महत्तेजो, जागर्त्ति जगति स्फुटम् ॥ ६ ॥
प्रत्याख्यातं तथाप्येवं, परिव्रज्यां चकार सः । शुभध्यानवशात् प्राप, केवलं च क्रमात् शिवम् ॥ ७ ॥

इति श्रीमुद्रित-ऋषिमण्डलवृत्तितः उद्धृता श्री जिनदेवर्षिकथा संपूर्णा॥

## ६२ श्री षण्मित्रर्षिकथा

श्रीसाकेतपुरे चन्द्रावतंसकनृपोऽभवत् । तत्सुतो मुनिचन्द्राख्यस्तद्दत्तं राज्यमन्वशात् ॥ १ ॥
निर्विण्णः काम-भोगेभ्यो, मुनिचन्द्रो नृपोऽन्यदा । भ्रातुः सागरचन्द्रस्योपान्ते व्रतमशिश्रयत् ॥ २ ॥
चचाल गुरुभिः सार्द्धमसौ देशान्तरं प्रति । ग्रामं प्रविष्टो भिक्षार्थं, सार्थभ्रष्टो बभूव च ॥ ३ ॥
अटव्यां क्षुत्-तृषाऽऽक्रान्तं, चत्वारो गोपदारकाः । सिषेविरे महर्षिं तं, पयोदानाच्चदर्शनैः ॥ ४ ॥
तस्य देशनया बुद्धाश्चत्वारो जगृहुर्व्रतम् । जुगुप्सां चक्रतुर्द्वौ तु, चत्वारोऽपि ययुर्दिवम् ॥ ५ ॥
चित्र—सम्भूतिजीवौ तौ, जुगुप्सावशतो भवान् । भ्रेमतुश्चाधमान् दास-मृग-मातङ्गसङ्कुलान् ॥ ६ ॥
द्वावप्यन्यौ दिवश्च्युत्वा, क्षितिप्रतिष्ठिते पुरे । सुताविभ्यकुलेऽभूतां, जाग्रत्पुण्योदयोन्मुखौ ॥ ७ ॥
चत्वारः सुहृदश्चान्येऽमिलन्निभ्यसुतास्तयोः । भुक्त्वा भोगान् षडप्यन्ते, धर्मं श्रुत्वा ललुर्व्रतम् ॥ ८ ॥

चिरमाराध्य चारित्रं, ते प्रान्ते प्रायपूर्वकम् । मृत्वाऽनतेरुः सौधर्मे, विमाने पद्मगुल्मके ॥ ९ ॥
चतुःपल्योपमान्यायुर्भुक्त्वा तत्रेभ्यसूनवः । कुरुदेशे चेषुकारपुरे चत्वार एव ते ॥ १० ॥
इषुकाराभिधो राजा, तत्प्रिया कमलावती । भृगुः पुरोधास्तत्पत्नी, यशेति क्रमतोऽभवन् ॥ ११ ॥ युग्मम्
नित्यं खिद्यतेऽपत्यार्थमत्यर्थं स पुरोहितः । देवोपयाचितं चक्रे, निमित्तज्ञान् स्म पृच्छति ॥ १२ ॥
ज्ञातवन्ताववधिना, तौ गोपदारकामरौ । यथोत्पत्स्यावहे द्यावां, गृहे भृगुपुरोधसः ॥ १३ ॥
साधुवेषं ततः कृत्वा, पुरोधोगृहमीयतुः । ततो तेन सभार्येणोपविष्टौ नार्पितासने ॥ १४ ॥
भृगोरग्रे सभार्यस्य, धर्ममूचतुरार्हतम् । प्रबुद्धौ दम्पती श्राद्ध-धर्मं जगृहतुस्ततः ॥ १५ ॥
भृगुः पप्रच्छ चिन्ताऽऽर्तो, भक्त्या तौ श्रमणोत्तमौ । निर्ग्रन्थौ ! भविताऽपत्य-योगः स्यादावयोरपि ? ॥ १६ ॥
वाचं वाचंयमावेतावूचतुश्चतुरोचिताम् । भवतोर्भविता भद्रौ ! (विप्रौ !), पुत्रयुग्मं गृहेऽचिरात् ॥ १७ ॥
केवलं बालकालेऽपि, प्रव्रजिष्यति तद् द्वयम् । कार्यो नाऽऽर्यैस्तस्य विघ्नो, बोधयिष्यति तद् बहून् ॥ १८ ॥
इत्युक्त्वा तौ गतौ देवौ, ततश्च्युत्वा पुरोधसः । पत्न्याः कुक्षाववतीर्णौ, तौ पुत्रत्वेन तत्क्षणात् ॥
(गृहे पुत्रौ समुत्पन्नौ, सुस्वप्नसूचितौ क्रमात्) ॥ १९ ॥
ततः पुराद् भृगुस्तस्थौ, प्रत्यन्तग्राममेत्य सः । प्रसूता युगपत् तत्र, भृगुपत्नी सुतद्वयम् ॥ २० ॥
व्युद्ग्राहितौ पितृभ्यां तौ, गृह्णीत इति मा व्रतम् । गृह्णन्ति डिम्भरूपाणि, यथा प्रव्रजिता अमी ॥ २१ ॥
भक्षयन्ति च तन्मासं, भूयारतां तेषु माऽन्तिकम् । ततोऽन्यदा तौ क्रीडन्तौ, ग्रामाद् बहिरुपेयतुः ॥ २२ ॥

इतश्च दैवात् तत्रैयुरध्वखिन्ना महर्षयः । तान् निरीक्ष्य भयभ्रान्तौ, भृगुपुत्रौ पलायितौ ॥ २३ ॥
एकं वटद्रुमारूढौ, मध्याह्ने मुनयोऽपि हि । गृहीतशुद्धपानान्नास्तत्रैवैयुर्विधेर्वशात् ॥ २४ ॥
विश्रम्य क्षणमेकान्ते, विधिवद् भोजनं व्यधुः । आरूढौ पश्यतस्तौ तु, शुद्धं भक्तं न चाऽऽमिषम् ॥ २५ ॥
ततस्तौ चक्रतूरूहापोहं क्वापीदृशा दृशा । दृष्टा आसन्नथोत्पेदे, प्राग्जातिस्मृतिरेतयोः ॥ २६ ॥
प्रबुद्धौ तान् मुनीन् नत्वाऽऽयातौ पित्रोरुपान्तिकम् । प्रबोध्य पितरौ ताभ्यां, सार्द्धं जगृहतुर्व्रतम् ॥ २७ ॥
महिष्या बोधितो भूभृदेवं ते सुहृदोऽपि षट् । प्रव्रज्य केवलज्ञानं, प्राप्य प्रापुः क्रमात् शिवम् ॥ २८ ॥
उत्तराध्ययनचतुर्दशाध्ययनतस्तयोः । प्रबोध(ध्य)वाक्यविस्तारो, ज्ञेयो नोक्तोऽत्र गौरवात् ॥ २९ ॥

इति श्रीमुद्रित–ऋषिमण्डलवृत्तितः उद्धृता श्री षणमित्रर्षिकथा सम्पूर्णा

## ६३ श्री संयतराजर्षिकथा

श्रीकाम्पील्यपुराधीशः, संयताख्यो नृपोऽभवत् । प्रतापतपनाऽऽक्रान्तपृथुप्रत्यर्थिपार्थिवः ॥ १ ॥
मृगव्यां स गतोऽन्येद्युर्गजाश्व–रथपत्तिभिः । परीवृतश्चतुर्दिक्षु, नृत्यद्वाजिगतः स्वयम् ॥ २ ॥
हयारूढोऽवधीद् भूपः, केसरोद्यानगान् मृगान् । मन्यमानः कृतार्थं स्वं, भयत्रस्तांस्तपस्विनः ॥ ३ ॥
अथ तत्र नृपोऽद्राक्षीद्, धर्मलीनं तपोधनम् । द्रुमाकीर्णमण्डपस्थं, स्वाध्याय–ध्यानबन्धुरम् ॥ ४ ॥
अश्वारूढोऽवधीत् तत्र, मुनिपार्श्वगतान् मृगान् । हतांस्तत्राऽऽगतोऽद्राक्षीत्, मुनीन्द्रं च महीपतिः ॥ ५ ॥

दध्यौ हृदि स सम्भ्रान्तो, हा ! मनागा(ग) हतो मुनिः । मन्दभाग्येन मयका, रसगार्द्ध्या(गृद्ध्याऽ-)र्दितेन च ॥६॥
मुक्त्वाऽश्वं चरणान् साधोर्ववन्दे विनयात् नृपः । कृताञ्जलिपुटश्चोचे, क्षमस्वाऽऽगोऽत्र मे मुने ! ॥ ७ ॥
अथासौ भगवान् मौनमालम्ब्य ध्यानतः स्थितः । न प्रतिवक्ति राजानं, ततः सोऽभूद् भयद्रुतः ॥ ८ ॥
नृपोऽवक् संयतोऽस्म्यस्मि, भूपो व्याहर मां मुने ! । नरकोटीर्दहेत् क्रुद्धो, यत् मुनिस्तेजसा ज्वलन् ॥ ९ ॥
राज्ञेत्युक्ते मुनिरूचेऽभयं तेऽभयदो भव[वेः] । अनित्ये जीवलोकेऽस्मिन्, हिंसायां रमसे कथम् ? ॥ १० ॥
राजन् ! सर्वं परित्यज्य, गन्तव्यमवशस्य ते । अनित्ये जीवलोकेऽस्मिन्, किं राज्ये प्रसजस्यहो ! ? ॥ ११ ॥
जीवितं चैव रूपं च, विद्युत्सम्पातचञ्चलम् । राजन् ! मुह्यसि यत्र त्वं, प्रेत्यार्थं नावबुध्यसे ॥ १२ ॥
दाराः सुताः सुहृद्वर्गो, बन्धवश्च सहोदराः । जीवन्तमनुजीवन्ति, मृतान्[तं] नानुव्रजन्त्यपि ॥ १३ ॥
निष्कासयन्ति पितरं, दुःखिता मृतमात्मजाः । तथा तेऽपि मृतं पुत्रमतो राजन् ! तपश्चरेः ॥ १४ ॥
ततस्तेनार्जितैर्द्रव्यैः, कलत्रैः परिरक्षितैः । क्रीडन्त्यन्ये नरा राजन् ! हृष्ट–तुष्टाः स्व(-स्त्व)लङ्कृताः ॥ १५ ॥
तेनापि यत् कृतं कर्म, शुभं वाऽप्यथवाऽशुभम् । कर्मणा तेन संयुक्तोऽवशो याति भवान्तरे ॥ १६ ॥
इति वैराग्यकृद्धर्मं, श्रुत्वा तस्यान्तिके मुनेः । भृशं संवेग-निर्वेदं, समापन्नो नराधिपः ॥ १७ ॥
ततो राज्यमसौ त्यक्त्वा, निष्क्रान्तो जिनशासने । गर्दभालेर्भगवतोऽनगारस्यान्तिके नृपः ॥ १८ ॥
सामाचारीं ततोऽभ्यस्यन्, मुनेराचारगोचराम् । संयतो विहरन्नागात्, सन्निवेशं तथाविधम् [तदाधिपम्] ॥१९॥
इतश्च कश्चिद् देवत्वं, प्राप्योत्पद्यामले कुले । कुतश्चिद् हेतुतो ज्ञातप्राग्जन्मोपाददे व्रतम् ॥ २० ॥

विहरन् संयतं तत्र, वीक्ष्यर्षिरिदमुक्तवान् । यथा ते दृश्यते रूपं, प्रसन्नं च मनस्तथा ॥ २१ ॥
पुनः प्रपच्छ किंनामा ?, को गोत्रोऽर्थाय कस्य वा ? । माहनः(न !) सेवसे बुद्धान् ?, विनीतो वोच्यसे कथम् ? ॥
सोऽप्यूचे संयताख्योऽहं, तथा गोत्रेण गौतमः । विद्याचरणयुक्ता मे, गुरवो गर्दभालयः ॥ २३ ॥
सोऽपृष्टोऽप्याख्यदज्ञानं, विनयं चा(वा)क्रियां क्रियाम् । चतुर्भिः स्थानकैरेभिर्मे यज्ञाः किं ब्रुवन्ति भोः ! ॥२४॥
इत्याविरकरोद् बुद्धो, ज्ञातकः परिनिर्वृतः । विद्या—चरणसम्पन्नः, सत्यः सत्यपराक्रमः ॥ २५ ॥
पतन्ति नरके घोरे, येऽसत्प्ररूपका नराः [ये चासत्यप्ररूपकाः]। निषेव्याऽऽर्यां धर्ममार्यं[-र्यं !], दिव्यां गच्छन्ति सद्गतिम्॥
म[मा]योक्तं सर्वमेतत् तु, मृषाभाषा निरर्थका । संयच्छन्नेव तिष्ठाम्युपाश्रये यामि गोचरे ॥ २७ ॥
सर्वेऽमी विदितास्ते मेऽनार्या मिथ्यादृशो यथा । जानामि सम्यगात्मानं, विद्यमाने भवान्तरे ॥ २८ ॥
पुनस्तं संयतोऽपृच्छत्, प्रेत्य जानासि तत् कथम् ? । उत्कृष्टायुर्महाप्राणे, स ऊचे प्राग्भवेऽभवम् ॥ २९ ॥
विमानाद् ब्रह्मलोकाख्यात्, च्युत्वाऽहं मनुजोऽभवम् । यथा तथाऽऽत्मनोऽन्येषां, जानाम्येवायुरादिकम् ॥३०॥
नानारुचिं च छन्दं च, संयतः परिवर्जयेत् । अनर्थांश्चापि व्यापारान्, विद्यामित्यनुसञ्चरेः[रे] ॥ ३१ ॥
निवर्त्तः[र्तें]परमन्त्रेभ्यः, प्रश्नादिभ्यस्तथा पुनः । उच्छ्रितोऽहो ! अहोरात्रं, विद्वानिति तपश्चरेः ॥ ३२ ॥
क्षत्रियस्तेन पृष्टोऽवगायुः पृच्छसि यच्च माम् । तत् प्रादुष्कृतवान् बुद्धस्तज्ज्ञानं जिनशासने ॥ ३३ ॥
सत्क्रियां रोचयेद् वीरो, वर्जयेच्चाप्यसत्क्रियाम् । सद्दृष्ट्या दृष्टिसम्पन्नो, धर्मं सेवस्व दुश्चरम् ॥ ३४ ॥
उपदिश्यैतदखिलं, क्षत्रियः संयतं मुनिम् । स्थिरीकर्त्तुं पुनः पूर्वनरोदाहरणान्यवक् ॥ ३५ ॥

तान्युत्तराध्ययनाष्टादशाध्ययनतो बुधैः । ज्ञेयानि ग्रन्थवाहुल्यात्, नोक्तान्यत्र मया पुनः ॥ ३६ ॥

इति श्रीमुद्रित–ऋषिमण्डलवृत्तित उद्धृता श्री संयतराजर्षिकथा संपूर्णः

## ६४ श्री अनाथीमुनिकथा

सिद्धान् साधून् नमस्कृत्यानुशिष्टिमर्थ(-र्घ्य)धर्मगाम् । कथ्यमानां मया तथ्यां, शृणुतोत्तमदेहिनः ! ॥ १ ॥
श्रेयःश्रेणिर्नृपः श्रेणिकाख्योऽन्येद्युर्वहिर्ययौ । अश्ववाहनिकाक्रीडार्थं चैत्ये मण्डिकुक्षिके ॥ २ ॥
तस्मिन् नानाद्रुमाकीर्णे, कानने नन्दनोपमे । साक्षाद् धर्ममिवाद्राक्षीत्, मुनीन्द्रं द्रुतले नृपः ॥ ३ ॥
रूपं वीक्ष्यास्य भूजानिस्तेजोऽतिक्रान्तभास्करम् । स विस्मयमना जज्ञे, तुष्टाव स्पष्टयन् वचः ॥ ४ ॥
अहो ! रूपमहो ! वर्णोऽहो । आर्यस्यास्य सोमता । अहो ! क्षान्तिरहो ! मुक्तिरहो ! भोगेष्वसङ्गता ॥ ५ ॥
नृपस्तस्य क्रमान् नत्वा, कृत्वा तिस्रः प्रदक्षिणाः । नाऽऽसन्ने नातिदूरे(र)स्थः, पप्रच्छेदं कृताञ्जलिः ॥ ६ ॥
तारुण्ये भोगकाले त्वं, प्राव्राजीश्चोत्थितो व्रते । एनमर्थमहं तावत्, शृणोम्यनु तवोदितम् ॥ ७ ॥
मुनिराख्यदनाथोऽस्मीश ! नाथो मे न विद्यते । न कञ्चिदपि पश्यामि, सुहृदं चानुकम्पकम् ॥ ८ ॥
ततः प्रहसितो राजा, श्रेणिको मगधाधिपः । एवमृद्धिमतस्तेऽत्र, कथं नाथो न विद्यते ? ॥ ९ ॥
भुङ्क्ष्व भोगान् मुने ! नाथो, भयत्राणं भवामि ते । मित्र-ज्ञातिपरिवृतो, मानुष्यं हि सुदुर्लभम् ॥ १० ॥
मुनिराहाऽऽत्मनैव त्वमनाथः श्रेणिकाऽसि भोः ! । आत्मनैव ह्यनाथः सन्, कस्य नाथो भविष्यसि ? ॥ ११ ॥

स एवं मुनिना प्रोक्तः, सुसम्भ्रान्तः सुविस्मितः । श्रुत्वेत्यश्रुतपूर्वं तद्, वचश्चोवाच पार्थिवः ॥ १२ ॥
हस्तिनोऽश्वा मनुष्या मे, पुरमन्तःपुरं च मे । भुञ्जे मानुष्यकान् भोगाना-श्चैश्वर्यं च मेऽधिकम् ॥ १३ ॥
सम्पत्प्रकर्ष ईदृक्षे, सर्वकामा(कर्मा)र्पणक्षमे । कथं भवाम्यनाथोऽहं १, मा भदन्त ! मृषा वद ॥ १४ ॥
मुनिराह नार्थं पृच्छां(प्रोच्छां,-प्रोत्थां वा), वेत्स्यनाथस्य पार्थिव ! । यथा ह्यनाथो भवसि, सनाथस्य(श्च)नराधिप! (:) ।
राजन् ! कथयतः शृण्वव्याक्षिप्तेन हृदा मम । यथा नाथो भवेत् प्राणी, यथा प्रवर्त्तितं मया ॥ १६ ॥
अत्र पूरस्ति कौशाम्बी, पुराणपुरभेदिनी । ममाऽऽसीद् जनकस्तत्र, प्रभूतधनसञ्चयः ॥ १७ ॥
वयसि प्रथमे राजंस्तदानीं वेदनाऽतुला । बभूव सर्वगात्रेषु, दाघः(हः) स्वाघोद्भवो मम ॥ १८ ॥
शस्त्रं यथा (यथात्रास्त्रं) महातीक्ष्णं, शरीरविवरान्तरे । आपीडयेदरिः क्रुद्ध इत्थं मे वेदनाऽभवत् ॥ १९ ॥
त्रिकं ममाऽऽन्तरेच्छा चोत्तमाङ्गं पीडयते भृशम् । इन्द्राशनिसमा घोरा वेदनाऽऽसीत् तदा मम ॥ २० ॥
उपस्थिता ममाचार्या, विद्या-मन्त्रचिकित्सकाः । अधीताः शास्त्रकुशला, मन्त्र-मूलविशारदाः ॥ २१ ॥
ते मे चिकित्सां कुर्वन्ति, चतुष्पादां यथाहितम् । मोचयन्ति च नो दुःखात्, तदेषाऽनाथता मम ॥ २२ ॥
सर्वसारमपि पिता, मदर्थं दत्तवान् परम् । न मोचयति दुःखाच्च, तदेषाऽनाथता मम ॥ २३ ॥
माताऽपि मे महाराज !, पुत्रशोकार्दिता परम् । न मोचयति दुःखाच्च(मे दुखं,-खात् ), तदेषाऽनाथता मम ॥२४॥
ज्येष्ठाः कनिष्ठाश्चैकोदरोद्भवा मे सहोदराः । न(वि)मोचयन्ति(नो)दुःखाच्च(त्), तदेषाऽनाथता मम ॥ २५ ॥
ज्येष्ठाः कनिष्ठा मे राजन् !, भगिन्यश्चैकमातृकाः । विमोचयन्ति नो दुःखात्, तदेषाऽनाथता मम ॥ २६ ॥

भार्याऽपि मे महाराज ! साऽनुरक्ता त्वनुव्रता । नेत्राभ्यामश्रुपूर्णाभ्यामुरः सिञ्चति मेऽधिकम् ॥ २७ ॥
अन्यदन्नं च पानं च, स्नानं माल्य–विलेपनम् । अज्ञातं वा मया ज्ञातं, सा भुङ्क्ते नैव कर्हिचित् ॥ २८ ॥
नापयाति क्षणमपि, सा बाला पार्श्वतो मम । विमोचयति नो दुःखात्, तदेषाऽनाथता मम ॥ २९ ॥
ततोऽहमुक्तवानेवं, दुस्सहा एव वेदनाः । सकृदाभ्यश्चेत् मुच्येयं, ततो गृह्णामि संयमम् ॥ ३० ॥
एवमुक्त्वा तथा ध्यात्वा, प्रसुप्तोऽस्मि नराधिप ! । रात्रौ ततोऽतिक्रामन्त्यां, वेदना मे क्षयं गता ॥ ३१ ॥
प्रभातेऽहं ततः कल्यः, सर्वानापृच्छ्य बान्धवान् । क्षान्तो दान्तो निरारम्भः, प्रापद्ये चानगारताम् ॥ ३२ ॥
ततोऽभवमहं नाथ आत्मनश्च परस्य च । त्रसाणां(नां) स्थावराणां च, सर्वेषां प्राणिनामपि ॥ ३३ ॥
आत्मा नदी वैतरणी, ममात्मा कूटशाल्मली । आत्मा कामदुघा धेनुरात्मा मे नन्दनं वनम् ॥ ३४ ॥
कर्त्ता विकरि(कर,-किर)ता चात्मा, दुःखस्य च सुखस्य च । आत्मा मित्रममित्रं(त्रश्)च, दुष्प्रस्थितः सुप्रस्थितः ॥३५॥
नृपैषाऽनाथताऽन्याऽपि, शृणु तामेकचित्ततः । निर्ग्रन्थत्वं यदासाद्य, सीदन्त्येकेऽधमा नराः ॥ ३६ ॥
यः प्रव्रज्य व्रतान्युच्चैः, प्रमादात् स्पृशतीह न । रसगृध्रोऽगृहीतात्मा, न च्छिनत्ति स बन्धनम् ॥ ३७ ॥
काचित् नायुक्तता यस्यास्तीर्या-भाषैषणादिषु । जुगुप्सनी(ना)यां नो धीर !, जातं मार्गमनुव्रजेत् ॥ ३८ ॥
चिरं मुण्डरुचिर्भूत्वा, तपोभ्रष्टोऽस्थिरव्रतः । आत्मानं क्लेशयित्वाऽपि, भवस्य स्यात् न पारगः ॥ ३९ ॥
पोल्ला मुष्टिर्यथाऽसारा, तथा कार्षापणोऽनृतः । राढामणिर्वैडूर्याग्रे, महर्घ्योऽज्ञेषु वै भवेत् ॥ ४० ॥
बृंहयित्वाऽऽजीविकायै, मुनिचिह्नं कुलिङ्गकम् । धृत्वा संयतमात्मानं, लपन् याति [नश्युपयाति] विघाततताम् ॥४१॥

कालकूटं यथा पीतं, हन्ति शस्त्रं च दुर्धृतम् एवं विषययुग् धर्मो, व्यापन्नो हन्ति भूतवत् ॥ ४२ ॥
इत्यादिशिक्षणं श्रुत्वा, ज्ञानोपेतं सुभाषितम् । हित्वा मार्गं कुशीलानां, महर्षीणां व्रजेः पथा ॥ ४३ ॥
व्रताचारगुणोपेतः, प्रपाल्यानुत्तरव्रतम् । निराश्रवः क्षयं नीत्वा, कर्माप्तैती पदं ध्रुवम् ॥ ४४ ॥
एवमूचे महानिर्ग्रन्थीयं निर्ग्रन्थराडिदम् । महायशा महाप्राज्ञो, विस्तरेण यथाश्रुतम् ॥ ४५ ॥
तुष्टश्च श्रेणिको राजा, कृताञ्जलिरदोऽवदत् । अनाथत्वं यथाभूतं, सुष्ठु मे दर्शितं त्वया ॥ ४६ ॥
साधो ! लाभाः सुलब्धास्ते, सुलब्धं च नृजन्म ते । सनाथाश्च भवन्तोऽत्र, स्थिता मार्गे यदर्हताम् ॥ ४७ ॥
नाथस्त्वमस्यनाथानां, महर्षेऽखिलदेहिनाम् । भव[वि]ताऽऽत्मानमिच्छाम्यत्रानुशासयितुं मुने ! ॥ ४८ ॥
आपृच्छ्य ध्यानविघ्नस्ते, यत् मया विहितो मुने ! । निमन्त्रितश्च यद् भोगैस्तत् क्षमस्वाखिलं मम ॥ ४९ ॥
एवं स्तुत्वा स राट्सिंहो, मुनिसिंहं महादरात् । सावरोधः सतन्त्रश्च शुद्धचित्तोपलक्षितः ॥ ५० ॥
उच्छ्वसितरोमकूपस्ततः कृत्वा प्रदक्षिणाम् । अभिवन्द्य च शीर्षेण, स्वस्थानमगमत् नृपः ॥ ५१ ॥ [युग्मम्]
गुणैः समृद्धश्चान्योऽपि, विप्रमुक्तो विहङ्गवत् । विजहारोर्वरापीठं, नष्टमोहस्तपोनिधिः ॥ ५२ ॥

इति श्रीमुद्रित-ऋषिमण्डलवृत्तितः उद्धृता श्री अनाथिमुनिकथा संपूर्णा.

## ६५ श्री अन्निकापुत्रर्षिकथा.

अस्त्यत्र भरतक्षेत्रे, मथुरानंगरीद्वयम् । तत्रोत्तरस्यां दिश्येका, दक्षिणस्यां परा पुनः ॥ १ ॥

अथोत्तरमथुरातस्तां याम्यमथुरापुरीम् । आगादेको वणिक्पुत्रो, दिग्यात्रार्थं महार्थवान् ॥ २ ॥
तत्रत्यश्रेष्ठिनैकेनामुष्य सख्यमभूत् समम् । न्यमन्त्रि तेन भुक्त्यर्थं, तस्याङ्गं ह्येतदादिमम् ॥ ३ ॥
भोजनायोपविष्टेऽस्मिन्, श्रेष्ठिनोऽस्य स्वसाऽन्निका । तालवृन्तकरा वातोपचौरस्तमुपाचरत् ॥ ४ ॥
तस्याः स श्रेष्ठिमू रूपं, निर्वर्ण्य वर्णनातिगम् । पादादारभ्य शीर्षान्तं, रागग्रस्तोऽभवत्तराम् ॥ ५ ॥
साऽर्थिता स्वजनैरुक्तमेनां दद्मस्तदा वयम् । यद्यापत्यसम्पत्तिं, यावत् त्वमिह तिष्ठसि ॥ ६ ॥
तथैव स्वीकृते तेन, जातोद्वाहोऽत्र तिष्ठति । समुखं साऽन्नि(न्न)काऽन्येद्युर्गुर्व्यभूद् गृह(हि) धर्मतः ॥ ७ ॥
इतश्च लेखस्तत्पित्रोरागात् तत्र लिपीकृतम् । यदश्रुभिर्दृशोः शोकाद्, वत्साऽऽन्ध्यं बाधतेऽधिकम् ॥ ८ ॥
जीवन्तौ प्रेक्षसे चेत् नौ, तदागच्छेर्दुतं सुत ! । मुञ्चन्नश्रूणि तं लेखं, वाचयामास दारकः ॥ ९ ॥
दृष्टः पृष्टस्तया नोचे, वाचयित्वा ततः स्वयम् । उक्तो मा खिद्यथा भर्त्तः !, सर्वं भव्यं भविष्यति ॥ १० ॥
ततस्तयोदितं पित्रोस्ताभ्यां प्रस्थापितोऽथ सः । सकलत्रोऽर्द्धमार्गेऽपि, प्रासूत सुतमन्निका ॥ ११ ॥
करिष्यतोऽभिधां सूनोः, पितराविति तेन न । मार्गे तस्यार्पितं नाम, पितृवक्त्रा हि सत्सुताः ॥ १२ ॥
उल्लापयन् परिजनोऽन्निकापुत्रस्तमित्यवक् । सम्रायातस्तदेवास्य, पितरौ नाम चक्रतुः ॥ १३ ॥
ववृधे चन्द्रलेखेवाऽन्निकापुत्रः पितुर्गृहे । ययौ च यौवनवनक्रोडं क्रोड इवोन्मदः ॥ १४ ॥
तदैव लघुकर्मत्वात्, त्यक्तभोगोऽग्रहीद् व्रतम् । विजहाराऽन्निकासूनुर्भूत्वाऽऽचार्यः क्रमात् महीम् ॥१५॥
पुष्पभद्रपुरेऽन्येद्युरागात् गङ्गातटस्थिते । पुष्पकेतुर्नृपस्तत्र, तत्प्रिया पुष्पवत्यभूत् ॥ १६ ॥

सा पुत्र–पुत्रिकारूपं, प्रासूत युगपद् युगम् । अन्योन्यं प्रेमसंयुक्तमपत्यमिव युग्मिनाम् ॥ १७ ॥
तद् वीक्ष्याचिन्तयद् भूपो, म्रियते हि वियोजितम् । तदेतद् गृहिधर्मत्वे, योजयामि परस्परम् ॥ १८ ॥
जनापवादरक्षार्थं, सदस्याहान्यदा नृपः । यदत्रोत्पद्यते रत्नं, सभ्याः ! स्यात् कस्य तद् वशे ? ॥ १९ ॥
सर्वे तेऽप्यूचिरे राज्ञे(ज्ञो), राजोचे तर्हि युग्मयोः । योजयामि विवाहं भोः ! स्वर्ण–मण्योरिवैतयोः ॥ २० ॥
पुष्पचूल–पुष्पचूलयोर्द्वयोर्युग्मजन्मनोः । राजा राज्या निषिद्धोऽपि, चक्रे पाणिग्रहोत्सवम् ॥ २१ ॥
मिथस्तावभिरेमाते, श्राविका पुष्पवत्यपि । तस्मात् प्रव्रज्य निर्वेदाद्, देवोऽभूत् परमर्द्धिकः ॥ २२ ॥
पुरे तस्मिन् मृते ताते, पुष्पचूलो नृपोऽभवत् । प्रियेऽवधेरधिस्नेहां ददर्शाऽम्बासुरः स[सु]ताम् ॥ २३ ॥
मा नरकेष्वगात्सोऽपि स्वप्ने तानित्यदर्शयत् । रात्रौ रात्रौ ततो भीता, पुष्पचूलाऽऽह भूभुजम् ॥ २४ ॥
प्रातः पाखण्डिनः पृष्टा, राज्ञाऽऽहुस्ते यथा तथा । अन्निकासूनवस्तेषां, स्वरूपमिदमभ्यधुः ॥ २५ ॥
नित्यान्धकाराः वीभत्साः क्षुत्–तृड्–रोगाग्रविग्रहैः । नारकैर्नित्यमाक्रान्ताः, स्मृता अपि भयावहाः ॥ २६ ।
तयोक्तं भगवन् ! स्वप्नः किमत्र ददृशे ? यतः । यथार्थं वित्थ तेऽप्यूचुर्विज्ञोऽर्हद्वचनैर्वयम् ॥ २७ ॥
देवलोकाः पुनः कालान्तरेऽस्या दर्शितास्तया । पुनः पाखण्डिनः पृष्टा, वैपरीत्येन चाभ्यधुः ॥ २८ ॥
यथास्थानन्निकापुत्राचार्या प्रोचुरथाऽऽह सा । देवलोकाः कथं लभ्याः ?, कथं न नरके गतिः ? ॥ २९ ॥
तैरुक्तः साधुधर्मोऽथ(-त्र), राज्ञी पप्रच्छ पार्थिवम् ।
व्रतार्थं सोऽवदद् भिक्षा, ग्राह्या खलु (यद्यादत्से भिक्षां) [illegible] ॥ ३० ॥

प्रपद्य तत् तया दीक्षा, गृहीता सूरयोऽप्यथ । तस्थुर्जङ्घाबलक्षीणा, गणं प्रस्थाप्य तत्र तु[नु] ॥ ३१ ॥
पुष्पचूला नृपावासाद्, भक्तमानीय यच्छति । गुरुभ्यः शुभभावेनोत्पेदेऽस्याः केवलं क्रमात् ॥ ३२ ॥
प्राक्प्रवृत्तं न विनयं, भनक्ति किल केवली । कालोचितं मनश्चिन्त्यं, भक्तं तेभ्यः स्म यच्छति ॥ ३३ ॥
श्लेष्मघ्नं श्लेष्मणः काल इत्याद्यवसरोचितम् । भक्तं हृच्चिन्तितं वत्से !, वेत्सि किं ? सूरयोऽवदन् ॥ ३४ ॥
अन्ये त्वाहुर्घने वर्षत्यानीतेऽन्नेऽथ तेऽभ्यधुः । किमेतत् साध्वि ! साऽऽहाऽऽगां, प्रासुकाम्भसि सूरयः ! ॥३५॥
प्रासुकाप्रासुकविधिं, वेत्सि वत्से ! घने कथम् ? । साऽऽहातिशयतः कीदृग् ? , स तु केवललक्षणः ॥ ३६ ॥
केवल्याशातना चक्रे, हा ! चक्रुः सूरयोऽधृतिम् । सोचे चोत्तरतां गङ्गां, केवलं भावि वोऽपि हि ॥ ३७ ॥
उत्तस्थुर्द्रुतमाचार्याः, को लाभे ह्यलसायते ? । गङ्गायां नावमारूढाः, स्वयं सज्जीकृतां जनैः ॥ ३८ ॥
यत्राऽन्निकासुताऽऽचार्यास्तस्थुः कोणे तथान्तरा । तत्र मज्जति नौः क्षिप्ता, जनैश्चोत्पाट्य तेऽम्भसि ॥ ३९॥
सुरेणाम्भस्यधःशूलं, दध्रेऽस्य प्राग्भवारिणा । तेन विद्धः शुभध्यानात्, केवलज्ञानमाप सः ॥ ४० ॥
सिद्धश्च निर्मितो देवैर्महिमा तस्य वर्ष्मणः । प्रयागं नाम तत् तीर्थं, पप्रथे तत्र विश्रुतम् ॥ ४१ ॥
कलेवरं जलचरैः, खाद्यमानं तदम्भसि । गङ्गाकूले क्वचित् लग्नं, प्रेर्यमाणं जलोर्मिभिः ॥ ४२ ॥
दैवाद् दक्षिणदंष्ट्रायां, पाटलेर्बीजमाविशत् । भित्त्वा करोटिं तद् जज्ञे, शाड्वलः पाटलिद्रुमः ॥ ४३ ॥
तेनोपलक्षिते स्थाने, पाटलीपुत्रपत्तनम् । उदायिभूभुजा न्यस्तं, कूणिकस्य पितुः शुचा ॥ ४४ ॥

इत्यन्निकासूरीणां, सम्बन्धोऽधिकसम्पदाम् । आवश्यकानुसारेणाऽऽविष्कृतः कृतिनां मुदे ॥ ४९ ॥

इति श्रीमुद्रित--ऋषिमण्डलप्रकरणवृत्तित उद्धृता श्री अन्निकापुत्रर्षिकथा संपूर्णा

## ६६ श्री धर्मरुचिकथा

रोहीतके पुरे जी(जू)र्णगणिका रोहिणीत्यभूत् । अनन्यजीविकोपाया राध्नोति गोष्ठिकोदनम् ॥ १ ॥
संस्कृतं संस्कृतद्रव्यैः, कटुतुम्बं तयाऽन्यदा । स्वयं स्वादु[द]परीक्षार्थं, दत्तस्तद्बिन्दुराननने ॥ २ ॥
अतीवकटुको लग्नस्तदेकत्रैव रक्षितम् । अन्यल्ललितगोष्ठ्यर्थं, पक्वं मा निन्दिताऽभवम् ॥ ३ ॥
गोष्ठ्यां गतायां भुक्त्वाऽन्नं, मासक्षपणपारणे । मुनिर्धर्मरुचिः प्राप्तो, भिक्षार्थं रोहिणीगृहम् ॥ ४ ॥
दत्तं तुम्बं तयाऽ[त]स्मै मा, मुधा याति[दू] धियेति तत् । अपूर्वलाभं मन्वानः, स गत्वाऽऽलोचयद् गुरोः ॥५॥
ज्ञातं[त्वा]विषोपमं तत् तैर्मुनिरुक्तो बहिस्त्यज । भक्षितं मृत्यवे ह्येतत्, तत् त्यक्तुं स गतोऽटवीम् ॥ ६ ॥
मुञ्चतः पात्रकं भूमौ, लिप्तस्तेन मुनेः करः । लुपितस्तत्र गन्धेनाऽऽयाता मम्रुश्च कीटिकाः ॥ ७ ॥
भूयसामङ्गिनां घातः, स्यात् ममैव मृतिर्वरम् । इति ध्यात्वा प्रतिलिख्य, मुमुक्षुर्मुखपोतिकाम् ॥ ८ ॥
एकत्र स्थण्डिले स्थित्वा, निन्दंस्तद् भुक्तवांस्ततः । तीव्राऽभूद् वेदना सम्यग्, विपद्याऽऽप शिवश्रियम् ॥ ९ ॥

इति श्रीमुद्रित--ऋषिमण्डलवृत्तितः उद्धृता श्री धर्मरुचिकथा संपूर्णा

## ६७ श्री चतुर्महर्षिकथा

चम्पायां कौशिकार्याख्य उपाध्यायोऽभवद् द्विजः । तस्याऽङ्गर्पिस्तथा रुद्रः, शिष्यावेतौ बभूवतुः ॥ १ ॥
अङ्को भद्रकस्तेनाऽङ्गर्षिस्तस्याभिधाऽभवत् । रुद्रको रौद्रहृद् ग्रन्थिच्छेदकस्तत्तथाऽस्य सा ॥ २ ॥
एधोऽर्थमन्यदा प्रेपिताबुभौ गुरुणा वने । सायमङ्गर्षिः काष्ठान्यादायाऽऽयाद् ऋजुवर्त्मना ॥ ३ ॥
रन्त्वा सर्वदिनं रमृत्वा, तमर्थं रुद्रकोऽचलत् । दध्यौ वीक्ष्य तमायान्तमद्य निस्सारितोऽस्मि हा! ॥ ४ ॥
इतश्च वत्सपालस्य, पन्थकस्य शिशोः प्रसूः । दत्त्वा ज्योतिर्यशा भक्तं, दारुभारार्दितैति च ॥ ५ ॥
तां हत्वैकत्र गर्त्तायां, लात्वाऽस्या दारुभारकम् । एत्यान्यवर्त्मना रुद्रो, धुन्वन् हस्तावदोऽवदत् ॥ ६ ॥
गुरो ! सुन्दरशिष्येण, तव ज्योतिर्यशा हता । स आगतो बहिर्निष्कासितः क्रोधाद् ययौ वनम् ॥ ७ ॥
चिन्तयंस्तत्र सद्ध्यानाद्, जातजातिस्मृतिर्व्रतम् । प्रपद्य केवलं लेभे, महिमाममरा व्यधुः ॥ ८ ॥
अभ्याख्यानं ददौ रुद्रोऽस्मै जनेभ्योऽभ्यधुः सुराः । निन्द्यमानो जनैर्दध्यौ, रुद्रोऽदः शुभकर्मतः ॥ ९ ॥
अभ्याख्यानं मयाऽसत्यं, प्रदत्तमिति चिन्तयन् । सम्बुद्धः सोऽभवत् प्रत्येकबुद्धश्चाग्रहीद् व्रतम् ॥ १० ॥
उपाध्यायः सभार्योऽपि, वैराग्याद् व्रतमग्रहीत् । उत्पाद्य केवलज्ञानं, चत्वारोऽपि ययुः शिवम् ॥ ११ ॥

इति श्रीमुद्रित-ऋषिमण्डलवृत्तित उद्धृताः श्री चतुर्महर्षिकथा सम्पूर्णा

## ६८ श्री देविलासुतर्षिकथा

उज्जयिन्यामभूत् पुर्यां, पार्थिवो देविलासुतः । अनुरक्तलोचनाऽऽख्या, प्रियाऽस्याऽऽरक्तलोचना ॥ १ ॥
नृपोऽन्यदाऽस्ति[ऽऽस्ते] शय्यायां, विवृणोति प्रिया कचान् । तदन्तः पलितं दृष्टं, जरालक्षणमक्ष[-लक्षि-]तम् ॥२॥
साऽऽह देवाऽऽगतो दूतः, सम्भ्रान्तो भूमिभृद् भृशम् । उत्थायेतस्ततः पश्यन्नापश्यत् तं तयोदितम् ॥ ३ ॥
क्वासौ प्रिये ! नृपोऽपृच्छत् ?, धर्मदूतस्तु साऽवदत् । तयाऽऽवेष्ट्य ततोऽङ्गुल्या, शनैः पलितमुद्धृतम् ॥ ४ ॥
आच्छाद्य क्षौमयुग्मेन, स्वर्णस्थाले पुरान्तरे । भ्रामयित्वा तमधृतिं, चक्रे भूपो भृशं हृदि ॥ ५ ॥
शापुर्मेऽनागतेऽप्यस्मिन् प्रव्रज्यां पूर्वजव्रजाः । ततः पद्मरथं राज्याधिष्ठातारं सुतं व्यधात् ॥ ६ ॥
स्वयं राज्ञ्या समं राजा, तापसव्रतमग्रहीत् । तथाऽणुमतिका दासी, दासः सङ्गतकोऽपि च ॥ ७ ॥
सर्वे सितगिरौ जग्मुस्तपोऽर्थं तापसाश्रमे । कालान्तरे व्रतं त्यक्त्वा, दासी दासश्च जग्मतुः ॥ ८ ॥
गर्भः पूर्वमनाख्यातो, महिष्या ववृधे तदा । अयशोभीरुणा राज्ञी, भूभुजा रक्षिता रहः ॥ ९ ॥
सौकुमार्यात् सुतां राज्ञी, प्रसुवाना व्यपद्यत । पिबन्ती स्तन्यमन्यासां, तापसीनां च सैधते ॥ १० ॥
कृतं नामार्द्धसंकाशा, तस्याः सा प्राप यौवनम् । अटव्या आगतं तातं, श्रान्तं विश्राम्यति स्म सा ॥ ११ ॥
सुकुमारकरस्पर्शात्, तस्यां रक्तोऽभवत् नृपः । गृह्णामि चाद्य कल्ये वा, चिन्तयन्निति तस्थिवान् ॥ १२ ॥
तामाश्लेष्टुमधाविष्टोटजकाष्ठे नृपोऽन्यदा । चस्खाल(स्खलनाद-)चिन्तयत् चित्ते, धिङ् मां कामान्ध[न्ध्य]बाधितम् ॥ १३

प्रेत्य न ज्ञायते किं स्यादेतच्च फलमैहिकम् ? । सम्बुद्धश्चावधिज्ञानं, लेभे कर्मक्षयोद्भवम् ॥ १४ ॥
सर्वकामविरक्तेन, भाव्यं भोः ! खलु देहिना । अभापेऽध्ययनं चेतद्, राजर्पिर्देविलासुतः ॥ १५ ॥
विरक्तां तां सुतां दत्त्वा, संयतीभ्यः स्वयं नृपः । उत्पाद्य केवलं सिद्धोऽर्द्धसङ्काशाऽपि निर्वृता ॥ १६ ॥

इति श्रीमुद्रित-ऋपिमण्डलप्रकरणवृत्तितः उद्धृता देविलासुतर्पिकथा संपूर्णा.

## ६९ श्री धन्यमहर्पिकथा

बभूव पुर्यां काकन्द्यां, जितशत्रुर्नृपाग्रणीः । सार्थवाहवधूस्तत्र, भद्रानाम्न्यस्ति विश्रुता ॥ १ ॥
धन्याख्योऽभूद् यथार्थोऽस्याः, सूनुरन्यूनदीप्तिमान् । कन्या द्वात्रिंशतं मात्रोद्यौवनः परिणायितः ॥ २ ॥
मात्रा द्वात्रिंशदावासा, द्वात्रिंशद्दायसंयुताः । तदर्थं कारिता भोगान्, भुङ्क्ते तदुपरि स्थितः ॥ ३ ॥
इतश्च समवासार्षीत्, श्रीवीरस्तत्पुरो बहिः । वन्दनाय(या)ययौ धन्य, उद्यद्रोमाञ्चकञ्चुकः ॥ ४ ॥
धर्मं श्रुत्वाऽऽप्तवैराग्योऽपृच्छद् व्रतकृते प्रसूम् । राजार्पितराज(ज्य)चिह्नस्फीत्या धन्योऽश्रयद् व्रतम् ॥ ५ ॥
व्रताहेऽपि प्रभुं नत्वा, जग्राहोग्रमभिग्रहम् । षष्ठपारणकं यावज्जीवमाचाम्लतोऽस्तु मे ॥ ६ ॥
ग्राह्या भिक्षा न संसृष्टाऽसंसृष्टाऽस्तु तथोज्झिता । इत्युग्रतपसाऽऽत्मानं, भावयन् विजहार सः ॥ ७ ॥
भक्तासिश्चेत् कथञ्चित् स्यात्, नाप्तिस्तस्याम्भसां पुनः । पठन्नेकादशाङ्गानि, सेहे क्षुत्-तृट्परीपहम् ॥ ८ ॥
इत्युग्रतपसाऽत्यर्थं, कृशीयान् सोऽभवत् मुनिः । न मनागपि दीनत्वं, तथापि क्वापि जग्मिवान् ॥ ९ ॥

एत्य राजगृहं वीरश्चैत्ये गुणशिले स्थितः । देशनान्ते प्रभुम् नत्वा, पप्रच्छ श्रेणिकस्त्विदम् ॥ १० ॥
स्वामिस्ते गौतमादीनां, शिष्याणां शीलशालिनाम् । चतुर्दशसहस्राणां, को दुष्करतपःक्रियः ॥ ११ ॥
स्वाम्याह राजन् ! धन्यर्षिः, सर्वेषूग्रतपा भृशम् । एतत् श्रुत्वा प्रभुम् नत्वाऽऽगत्य धन्यं नृपोऽनमत् ॥ १२ ॥
धन्यः सुलब्धजन्माऽसि, यत् त्वां वीरजिनः स्वयम् । एवं वर्णयतीत्युक्त्वा नत्वाऽगात् श्रेणिको गृहम् ॥ १३ ॥
वर्ण्यमानोऽप्यसावेवं, नैवोत्कर्षमगात् मनाक् । पालयामास चारित्रं, नवमासानखण्डितम् ॥ १४ ॥
मासिकया संलेखनया, कालं कृत्वोदपाद्य(द)सौ । सर्वार्थसिद्धे चोद्धृत्य, विदेहे शिवमाप्स्यति ॥ १५ ॥

इति श्रीऋषिमण्डलप्रकरणवृत्तितः उद्धृता धन्यमहर्षिकथा संपूर्णा.

## ७० श्री शीतलाचार्यकथा

श्रीहास्तिनपुरे वज्रसिंहः सिंहवलो नृपः । सौभाग्यमञ्जरी तस्य, प्रिया पुत्रस्तु शीतलः ॥ १ ॥
त्रैलोक्यसुन्दरी पुत्री, सा काञ्चनपुरप्रभोः । कञ्चनप्रभराजस्य, यौवने परिणायिता ॥ २ ॥
निर्विण्णः काम–भोगेभ्यः, कुमारः शीतलोऽन्यदा । प्राव्राजीत् स्थविरोपान्ते, सूरिश्चासीद् बहुश्रुतः ॥ ३ ॥
आसंस्त्रैलोक्यसुन्दर्याश्चत्वारः सूनवः क्रमात् । तेषां कथान्तरे नित्यं, सा वर्णयति शीतलम् ॥ ४ ॥
यथा वो मातुलो राज्यनिःस्पृहः शिश्रिये व्रतम् । कालो यात्येवमन्येद्युस्तत्रेयुः स्थविरर्षयः ॥ ५ ॥
निशम्य तदुपान्ते तेऽसारतां संसृतेर्भृशम् । प्रबुद्धा जगृहुर्दीक्षां, क्रमाद् जाता बहुश्रुताः ॥ ६ ॥

मातुलं शीतलाचार्यं, गुरुमापृच्छ्य वन्दितुम् । प्रचेलुस्तेऽन्यदा जग्मुस्तत्पावितपुरो बहिः ॥ ७ ॥
बहिर्विकाल इत्यस्थुस्ते देवकुलिकान्तरे । यान्तं पुरान्तः श्राद्धं तेऽवोचन् वाच्यं गुरोरदः ॥ ८ ॥
आत्तव्रतास्ते जामेया, वन्दितुं वो यदैयरुः । विकाल इति नाऽऽजग्मुरुक्तेऽहृष्यद् गुरुर्भृशम् ॥ ९ ॥
तत्र तेषां शुभध्यानादुत्पेदे केवलं निशि । प्रातस्ते तत्र नाऽऽयातास्ततो(दा) दध्यौ गुरुर्ध्रुवम् ॥ १० ॥
ते सूत्रपौरुषीं कृत्वैष्यन्ति तत्रापि नाऽऽययुः । अथाऽर्थ(-पार्थ) पौरुषीं तत्राप्यैयुर्नैते ततो गुरुः ॥ ११ ॥
स्वयमुत्कण्ठितोऽचालीत्, नाभ्युत्तस्थुर्न ते क्रमौ । प्रामार्जयन् वीतरागा, गुरोर्न्यस्य सदण्डकम् ॥ १२ ॥
प्रतिक्रम्याऽऽलोच्य सूरिस्तान् वन्दे कुत ? इत्यवक् । प्रतिभाति यतस्ते ते वन्दस्वेत्यवदन् गुरुम् ॥ १३ ॥
निस्त्रपत्वमहो ! धाष्टर्यमेषामित्येष रोषतः । ववन्दे तान् मुनीन् सूरिर्वन्दित्वा तस्थिवान् पुरः[रा] ॥ १४ ॥
प्राक्प्रवृत्तं न(-त्तम-)विनयं, भि(भ)नत्ति(क्ति) किल केवली । जीतकल्पोऽयमित्येषां, तेषां (गुरौ) तस्मिन् न चास्ति सः॥
तेऽवोचन् वन्दिता द्रव्यवन्दनेन पुरा पुनः । वन्दध्वं भाववन्दनविधिना विधिनाऽधुना ॥ १६ ॥
कषायदण्डकैर्वन्दमानं पश्यन्ति ते गुरुम् । षट्स्थानपतितं सोऽवग्, ज्ञायते किमदोऽपि हि ? ॥ १७ ॥
तेऽप्यूचुः सुतरां विद्मः, कथं ? नोऽतिशयोऽस्ति यत् । छाद्मस्थिकः कैवलिकः ?, प्रोचुः कैवलिकं च ते ॥ १८ ॥
हहा ! केवलिनो मन्दभाग्येनाऽऽशातिता मया । निनिन्द भृशमात्मानं, शीतलः शीतलाशयः ॥ १९ ॥
जातरोमोद्गमस्तोषात्, परं संवेगमागतः (-मत्) । ददानो वन्दनं सूरिः, दण्डकेभ्यो निवृत्तवान् ॥ २० ॥
क्रोधाद् यथा पुराऽवध्नात्, कर्माण्याच्छोटयत् तथा । प्रविष्टोऽपूर्वकरणं, शुभाभिप्रायसम्भवम् ॥ २१ ॥

चतुर्थवन्दनस्यान्ते, शीतलः प्राप केवलम् । सैकैव कायिकी चेष्टाऽभूद् हेतुर्बन्ध–मोक्षयोः ॥ २२ ॥

इति श्रीमुद्रित–ऋषिमण्डलप्रकरणवृत्तितः उद्धृता शीतलाचार्यकथा संपूर्णा.

## ७१ श्री अवन्तिसुकमालर्षिकथा

सुहस्तिसूरिरन्यत्र, विहृत्योज्जयिनीं पुरीम् । जीवन्तस्वामिप्रतिमां, नमस्कर्तुमगात् पुनः ॥ १ ॥
स्थित्वा तद्बहिरुद्याने, सूरिः प्रैषीत् मुनिद्वयम् । उपाश्रयार्थं तद् भद्राश्रेष्ठिनीगृहमागमत् ॥ २ ॥
स्ववाहनकुटी तेभ्यो, भक्त्या नत्वाऽर्पिता तया । सगच्छाः सूरयस्तस्थुस्तत्र सन्तोषशालिनः ॥ ३ ॥
प्रदोषे नलिनीगुल्माख्याध्ययनं सुहस्तिभिः । परावर्तितुमारेभे, शुभभावाभिनन्दकम् ॥ ४ ॥
अवन्तिसुकुमालाख्यः, पुण्यवान् श्रेष्ठिनीसुतः । स्त्रीभिर्द्वात्रिंशता सप्तभूगृहस्थो ललत्यलम् ॥ ५ ॥
ददावध्ययने कर्णं, सम्यक् श्रोतुमनास्ततः । भद्रासूस्तत उत्तीर्य, वसतिद्वारमाययौ ॥ ६ ॥
मयाऽनुभूतं क्वापीदं, भद्रासूश्चिन्तयन्निति । नलिनीगुल्मविमाने, प्राक्स्वस्या(प्राक्स्वा-)वस्थानमस्मरत् ॥ ७ ॥
गन्तुं तत्रोत्सुकोऽत्यर्थं, गुरून् नत्वाऽथ सोऽवदत् । प्रभोऽहं प्रव्रजिष्यामि, प्रव्राजयत मां द्रुतम् ॥ ८ ॥
प्राहाऽऽर्यः सुकुमारोऽसि, भाद्रेयोऽभिदधे प्रभो ! । सामाचारीं चिरं पालयितुं नेशोऽस्मि दुश्चराम् ॥ ९ ॥
तेन सानशनां दीक्षामादास्येऽहं समुत्सुकः । सूरिणाऽभाणि बन्धून् स्वांस्तत् पृच्छ सुकृ(स्वव्र)तकृते ॥ १० ॥
वेश्मैत्य तेन ते पृष्टाः, सादरं नानुजज्ञिरे । स्वयं केशानिव क्लेशांस्ततोऽसावुदमूलयत् ॥ ११ ॥

प्रव्रज्यागाद् गुरूपान्तमात्तलिङ्गो भवेत् स्वयम् । इति प्रव्राजयामास, भद्रापुत्रं सुहस्त्यपि ॥ १२ ॥
व्रतकष्टं चिरं सोढुम-सहिष्णुः सुहस्तिनम् । आपृच्छ्यानशनचिकीर्षयौ पितृवनं मुनिः ॥ १३ ॥
कन्थारिकाकुडङ्गान्तस्तस्थावु(-रस्थादु-)त्सर्गयोगवान् । असृगास्त्रावविस्त्राणि, लिहाना तत्पदान्यथ ॥ १४ ॥
विवेश जम्बूकी काचित्, क्षुत्क्षामा सशिशुस्तदा । पादं खादितुमारेभे, सैकं तच्छिशवोऽपरम् ॥ १५ ॥
मेने तां पादखादित्रीं, पादसंवाहिकामिव, स मुनिर्निश्चलध्यानाधरीकृतसुराचलः ॥ १६ ॥
चटच्चटिति तच्चर्म, त्रटत्त्रटिति जाङ्गलम् । धगद्धगिति मेदश्च, कटत्कटिति कीकसम् ॥ १७ ॥
तत्पादं भक्षयन्ती साऽऽद्ये यामे निरशेषयत् । द्वितीयं डिम्भरूपाणि, न पुनः तन्मुनेर्मनः ॥ १८ ॥
यामे द्वितीये तस्योरू, तृतीये तुन्दमप्यथ । तुर्ये यामे विपद्यासौ, नलिनीगुल्ममासदत् ॥ १९ ॥
रञ्जितैर्निर्ममत्वेन, निर्ममे महिमाऽमरैः । तद्भार्यास्तमपश्यन्त्यः, पप्रच्छुर्गौरवाद् गुरुम् ॥ २० ॥
ज्ञात्वा ज्ञानेन वृत्तान्तं, तस्याऽऽख्यन् सूरयोऽखिलम् । पत्न्यो गत्वा शशंसुस्तद्, भद्रायै साऽप्यगाद् वनम् ॥२१॥
दृष्ट्वाऽऽकृष्टं च नैऋत्यां, भद्रा सूनोः कलेवरम् । रुरोद विललापोच्चैः, स्ववधूभिर्वृता भ्रगे ॥ २२ ॥
वत्स ! नालङ्कृथा गेहमेकस्मिन्नपि वासरे । प्रव्रज्य पर्यहार्षीर्मां, निर्मोहत्वाद् गुरूंश्च किम् ? ॥ २३ ॥
रात्री भवित्री कल्याणी, काऽपि हा दैव ! कर्हिचित् । या स्वप्ने दर्शयित्वा त्वामस्मान् सञ्जीवयिष्यति ॥२४॥
एवं विलप्य बहुधा, भद्रा सिप्रानदीतटे । तस्योर्ध्वदैहिकं चक्रे, क्रन्दन्ती करुणस्वरम् ॥ २५ ॥
चक्रिरे शङ्खोद्धरणं, तत्प्रियाः क्लिन्नवाससः । मुक्त्वैकां गुर्विणीं भद्रा, प्राव्राजीत् स्ववधूवृता ॥ २६ ॥

गुर्विण्या जातपुत्रेण, पितृमृत्यूपलक्षिते । स्थाने चक्रे महादेव–कुलमुत्तुङ्गतोरणम् ॥ २७ ॥
तदद्यापि महाकालाख्यमवन्तिविभूषणम् । वर्त्तते कालदोषेण, मिथ्यादृग्भिरधिष्ठितम् ॥ २८ ॥
काले सुहस्त्यपि गुरुर्निजगच्छभारं, न्यस्यान्तिषद्यनुपमश्रुतवारिराशौ ।
प्रायं विधाय निजकायममयं विहाय, स्वर्लोकमस्तकमणिप्रभुतां प्रपेदे ॥ २९ ॥

इति श्रीमुद्रित–ऋषिमण्डलवृत्तितः उद्धृता श्री अवन्तिसुकुमालकथा संपूर्णा

## ७२ श्री कार्त्तिकश्रेष्ठिकथा

जितशत्रुरभूद् भूपः, कुरुषु हस्तिनापुरे । सहस्राष्टवणिक् श्रेष्ठः, श्रेष्ठ्यासीत् तत्र कार्त्तिकः ॥ १ ॥
श्राद्धः श्रद्धाधरः श्राद्धप्रतिमानामसौ शतम् । चकाराद्वैतसम्यक्त्वो, जीवाजीवादितत्त्ववित् ॥ २ ॥
तत्राऽऽगादन्यदा मासोपवासी गैरिकाभिधः । गतानुगतिको लोकस्तं कार्त्तिकमृतेऽर्चति ॥ ३ ॥
मृगयत्यस्य छिद्राणि, सोऽनन्यगतिकोऽन्यदा । निमन्त्रितः पारणार्थं, राज्ञे वीक्ष्याह स क्षणम् ॥ ४ ॥
पारयामि तदा राजन्!, परिवेषयति कार्त्तिकः । यदा मां नान्यथाऽवश्यं, नृपोऽज्ञासीत् तदाग्रहम् ॥ ५ ॥
ततः समस्तसामन्तसमेतस्तद्गृहं गतः । ससम्भ्रमः समुत्थाय, तं श्रेष्ठीति व्यजिज्ञपत् ॥ ६ ॥
देवपादैः कथं पादैरद्य मत्सद्म पावितम् ? । समादिश ममादेशं, महानुग्रहसङ्ग्रहम् ॥ ७ ॥
पार्थिवः स्वार्थसिद्ध्यर्थमूचे श्रेष्ठिन्! पुरं मम । प्रकाश्यते त्वयैकेन, रविणेवाब्जमण्डलम् ॥ ८ ॥

परिवेषय मद्गेहे, भुञ्जानस्य तपस्विनः । गैरिकस्येति मे कृत्यं, परं त्वय्येव तिष्ठति ॥ ९ ॥
श्रेष्ठयाहास्माकमाचारो, नायमाचारकोविद ! । परं त्वत्पुरवासित्वात्, करिष्येऽदो हृदो विना ॥ १० ॥
तपस्वी पारणायाऽऽगादुत्सुको नृपमन्दिरे । औत्सुक्यं पारणे हि स्याद्, विशेषे तादृशे किमु ? ॥ ११ ॥
घृष्टोऽसीति वदन् दुष्टश्चालयत्यङ्गुलि निजाम् । ददत् राजाभियोगेन, चित्ते श्रेष्ठीत्यचिन्तयत् ॥ १२ ॥
प्रागेव प्राव्रजिष्यं चेन्नाभविष्यत् पराभवः । ममायमिति निर्वेदास्पदीचक्रे निजं मनः ॥ १३ ॥
समेत्यात्यन्तसंवेगात्, श्रीमुनिसुव्रतान्तिके । नैगमाष्टसहस्रेण, सार्द्धं श्रेष्ठी श्रितो व्रतम् ॥ १४ ॥
पपाठ द्वादशाङ्गानि, द्वादशाब्दानि च व्रतम् । प्रपाल्य कल्पे प्रथमे (सौधर्मे), सौधर्मेन्द्रो बभूव सः ॥ १५ ॥
तपस्वी वाहनं जज्ञेऽस्याभियोगिककर्मणा । तं ज्ञात्वाऽवधिनाऽनश्यद्, बद्ध्वाऽऽनीतोऽङ्गरक्षकैः ॥ १६ ॥
तमारूढो हरिर्नागं, सोऽमर्षात् स्वं द्विधाऽकरोत् । चक्रे द्वैरुप्यमिन्द्रोऽपि द्वैरूप्येणाऽऽरुरोह च ॥ १७ ॥
चक्रे यावन्ति रूपाणि, तावन्त्येव हरिर्व्यधात् । आहतो मुष्टिनाऽनश्यद्, वज्रिणा वज्रपाणिना ॥ १८ ॥
स्वकर्म चिन्तयंस्तस्थौ, पश्चात् पश्चाकृतिं भजन् । तपस्वी वासवोऽपीत्थं(द्धं), भुञ्जानौ स्तः सुखं दिवि ॥ १९ ॥

इति श्रीमुद्रित–ऋषिमण्डलवृत्तितः उद्धृता श्री कार्तिकश्रेष्ठिकथा सम्पूर्णा.

## ७३ महेश्वरदत्तकथा

तथाहि तामलिप्त्याख्यपुर्यां श्रेष्ठ्यभवत् पुरा । नाम्ना महेश्वरदत्तः, समुद्र–बहुलाऽऽत्मजः ॥ १ ॥

लोभाभिभूतस्तत्तातः, प्रभूताऽऽरम्भ सम्भवः, । मृत्वा तत्रैव देशेऽभूत्, सैरिभो ही ! (हा!) भवो(वे)ऽद्भवः ॥ २ ॥
तदाऽऽर्त्तिबहुला मृत्वा, बहुलाऽप्यभवत् शुनी । गाङ्गिलाऽऽख्या महेश्वरदत्तस्याऽऽस्ते प्रिया प्रिया ॥ ३ ॥
गृह[रहः]स्थैकाकिनी रेमे, समं जारेण साऽसती । स्त्रीणामेकाकिनीनां हि, कामाग्निर्बा[-मोऽङ्के बा-]धतेऽधिकम् ॥
रममाणां प्रियां भर्त्ता, जारेण सममन्यदा । अन्यद्वारागतोऽकस्माद् ददर्शाहो हि पच्यते ॥ ५ ॥
तौ स्रस्तकुन्तलौ त्रस्तनेत्रौ, कम्प्रवपुर्लतौ । सोऽपश्यद् रतमीत्याऽऽत्तपरावर्त्तोत्तरीयकौ ॥ ६ ॥
धृत्वा केशेषु जारं स, भल्लूकं व्याधवत् क्रुधा । चपेटाभिरिवाविष्टं, मान्त्रिकस्तमकुट्टयत् ॥ ७ ॥
ममर्द निर्दयं पद्भ्यां, कुलाल इव मृत्तिकाम् । यष्टिभिः कुर्कुरमिव, सापराधमताडयत् ॥ ८ ॥
प्रणश्यार्द्धमृतो जारः, किञ्चिद् गत्वाऽपतद् भुवि । मूर्खोऽकार्पं मुमूर्षुः किं ?, कण्ठस्थासुरचिन्तयत् ॥ ९ ॥
मृत्वा स्वबीज एवासौ, पुत्रभूयमवाप्तवान् । कालेन गाङ्गिला सूनुं, सुषुवे सुखवेदनम् ॥ १० ॥
तमात्मजातं मन्वानः, श्रेष्ठी कुण्डमलालयत् । वर्द्धमानः कूर्चकचाऽऽकर्षकार्हो बभूव सः ॥ ११ ॥
ततश्च पुंश्चलीदोषं, पुत्रप्रेम्णा महेश्वरः । गाङ्गिलाया विसस्मार, प्रायः स्त्रीष्वार्द्रहृद् गृही ॥ १२ ॥
अथाऽऽयाते पितुर्मृत्युवासरावसरोत्सवे । सोऽक्रीणात् पितृजीवं तं, महिषं मूर्खशेखरः ॥ १३ ॥
तं हत्वा महिषं मांसं, क्रोडस्थकुण्डसूनवे । ददानोऽश्नाति श्रेष्ठी स्म, धिगज्ञानं हि देहिनाम् ॥ १४ ॥
कुर्कुरी बहुलाजीवः, समांसं पतिकीकसम् । कटकटिति कुर्वाणा, नृत्यत्पुच्छा चचर्व च ॥ १५ ॥
इतश्च कश्चिदायातस्तद्गेहे मासपारणे । भिक्षार्थं भिक्षुरद्राक्षीद्, ज्ञानेनैतद् विरूपकम् ॥ १६ ॥

अनात्तभिक्षो व्यावृत्तो, धावित्वाऽऽह महेश्वरः। हर्षुलोऽस्मि न चाभक्तो, भिक्षाऽऽत्ता किं न मद्गृहात्? ॥१७॥
मुनिराहेदृशे गेहे, भिक्षाऽऽदानं न साम्प्रतम्। एकं हि मांसमशुचि, परं तदपि वप्तृजम् ॥ १८ ॥
कथमेतदिति पृष्टे, श्रेष्ठिनाऽऽचष्ट साधुराट्। पुत्रः पित्रामिषैः शत्रुः, पोष्यते हा! धिगज्ञताम् ॥ १९ ॥
कः प्रत्ययः? इति पृष्टे, सार्थेशेन मुनिर्जगौ। शुनीं पृच्छ निखातं प्राग्, न्यस्तं सोऽपि तथाऽकरोत् ॥२०॥
तत्राऽऽनीता शुनी जातिस्वभावाद् भुवमंघ्रिभिः। सा चखान खनित्राभैः, शिष्यार्थमिव तस्य तु [नु] ॥२१॥
जातप्रत्ययतस्तीव्रवैराग्याच्च महेश्वरः। उपादत्त मुदा दत्तपात्रवित्तो जिनव्रतम् ॥ २२ ॥

इति श्रीमुद्रित–ऋषिमण्डलवृत्तितः उद्धृता श्रीमहेश्वरदत्तकथा संपूर्णा.

## ७४ श्री नागदत्त श्रेष्ठिकथा

कस्मिंश्चिन्नगरे नाग–दत्तो नाम वणिक्पुरा। हर्म्यनिर्मापकं कारु–मित्थं गर्वात्समादिशत् ॥ १ ॥
तथा रञ्जय हर्म्यं मे, तद्यावत्सप्त पूरुषान्। तिष्ठेदेकेन रूपेण, मालिन्यं न भवेद्यथा ॥ २ ॥
कुतोऽपि सहसाऽऽयात–स्तत्समीपस्थितो मुनिः। श्रुत्वा तस्य तथा वाक्यं, चकार सहजं स्मितम् ॥ ३ ॥
अनन्तरं नागदत्तो, भोक्तुं स्वगृहमागमत्। क्रोडे कृत्वा सुतं भोक्तुं, पीठे समुपविष्टवान् ॥ ४ ॥
तस्मिन्नेव क्षणे पुत्रो, भक्तस्थाल्याममूत्रयत्। श्रेष्ठी मूत्रं पराकृत्य, भोक्तुमारभताऽघृणः ॥ ५ ॥
दैवात्तत्र समायातो, भिक्षार्थं स मुनिः सुधीः। मोहयुक्तां दशां नाग–दत्तस्य दृष्टवांस्तथा ॥ ६ ॥

तद्दृष्ट्वा स पुनः किञ्चि–ज्जहास मुनिपुङ्गवः । नीत्वा भिक्षां प्रतस्थौ च, शोचन् श्रेष्ठिधियं मुहुः ॥ ७ ॥
अथ श्रेष्ठी नागदत्तः, स्वापणे गतवान् पुनः । उद्घाट्य च कपाटं स, स्वासने समुपाविशत् ॥ ८ ॥
वधिकस्य करान्मुक्त्वा, छागलस्तत्क्षणो गृहे । श्रेष्ठिनः प्रविवेशाशु, प्राणरक्षणकाम्यया ॥ ९ ॥
तस्माद्याचितवान् पश्चा–द्वधिकश्छागलं निजम् । अथवा तस्य मूल्यं स, यल्लोकेषूचितं मतम् ॥ १० ॥
वधिकाय स निष्काश्य, प्रादाच्छ्रेष्ठी गृहादजम् । भूयो मुनिः स तत्रैव, गच्छन् प्राप्तो विधेर्वशात् ॥ ११ ॥
निर्दयत्वं विलोक्यास्य पुनरेव स्मितं मुनिः । चकार नागदत्तस्तद्, दृष्ट्वा सन्देहमाप्तवान् ॥ १२ ॥
उपाश्रये ततो गत्वा, मुनेः पार्श्वे जगाद च । वारत्रयं मुने ! कस्मा–ज्जहसे त्वयका वद ॥ १३ ॥
ततो ज्ञानी मुनिस्तस्य, कारणं सकलं जगौ । मोहग्रन्थिविभेदाय, नागदत्तस्य श्रेष्ठिनः ॥ १४ ॥
कारुस्त्वया पुराऽऽदिष्टो, हर्म्यस्य रञ्जनाय यत् । किन्तु सप्त दिनान्येव, तवायुरवशिष्यते ॥ १५ ॥
स्मितं कृतं मया तस्मात, यदल्पायुर्जनः स्वयम् । गृहरूपं चिरस्थायि, कर्तुं मोहात्समीहते ॥ १६ ॥
यत्पुत्रमूत्रितस्थाल्यां भोजनं कृतवानसि । स पुत्रस्तव भार्याया, जारः पूर्वभवेऽभवत् ॥ १७ ॥
तद्दृष्ट्वाऽपि स्मितं मेऽभूद्–यल्लोकः कीदृशः कुधीः । मूत्रं स्वभार्याजारस्य, पिबत्यादरतोऽघृणः ॥ १८ ॥
निष्कापितस्त्वया यश्च, छागलः स्वापणात्सहि । पूर्वजन्मपिता तेऽस्ति, विद्धि सर्वानृतं वचः ॥ १९ ॥
तद्दृष्ट्वा सहजं हासं, कृतवानहमञ्जसा । पितरं शरणाऽऽयातं, बलान्निःसारयत्यसौ ॥ २० ॥
तच्छ्रुत्वाऽनागदत्तोऽसौ, सहसोत्थाय विस्मितः । वधिकस्य गृहं गत्वा, ततश्छागमयाचत ॥ २२ ॥

जगाद वधिकः श्रेष्ठिन् ! छागोऽसौ पच्यते गृहे । चुल्लिकायामधिश्रित्य, जीवनास्त्यधुना तु सः ॥ २२ ॥
संसारासारतां बुध्वा, निर्वेदं प्राप्तवान् ततः । स्थिरधैर्यश्च हृदये भूयो, मुनीन्द्रशरणं ययौ ॥ २३ ॥
चारित्रं च ततः सद्यो, गृहीत्वा श्रेष्ठिपुङ्गवः आत्मकल्याणसिध्ध्यै स, यत्नवानभवद्भृशम् ॥ २४ ॥
यावन्न मुनिवाक्येन, प्रत्यक्षेण विबोध्यते । उपदेशात्मकेनाथ, तावन्मोहस्य नो क्षयः ॥ २५ ॥
संसारमीदृशं ज्ञात्वा, तत्रैव निरता भृशम् । यतन्ते नात्मने लोका, हन्त मोहो दुरत्ययः ॥ २६ ॥
तन्नाशार्थं सदा लोकैः, श्रोतव्यस्तु सदागमः । येनान्तर्लोचनस्याशु, भवेदुद्घाटनं शुभम् ॥ २७ ॥

## ७५ निमित्तकथकमुनिकथा

अपृच्छन्मुनिमासाद्य, काचित्प्रोषितभर्तृका । कदामत्पतिरागन्ता, परदेशाद्द्रुतं वद ॥ १ ॥
ज्योतिर्ज्ञानेन मुनिराडुवाच तरुणीम्प्रति । पञ्चभिर्दिवसैर्भर्ता, तवाऽऽगन्ता वियोगिनि ! ॥ २ ॥
साऽतिहृष्टमना नारी, पत्युरागतिवासरे । कृत्वाऽथ निजशृङ्गारं, पाकं च सरसं तथा ॥ ३ ॥
पत्युः स्वागतसामग्रीं, नीत्वा तस्थौ निजाङ्गणे । मार्गं मुहुर्मुहुस्तस्य, प्रेक्षमाणा च तद्दिने ॥ ४ ॥
यथोक्तावसरे गेहे, पतिं दृष्ट्वा समागतम् । सत्कारं परया भक्त्या, चकार शुभमानसा ॥ ५ ॥
दशां दृष्ट्वा पतिस्तस्याः, कुलटात्वमशङ्कत । लोकानां हि मतिः पूर्वं, दुर्मार्गमनुधावति ॥ ६ ॥
किन्तु तस्याः परीक्षार्थं, तूष्णीं तस्थौ स दुर्मतिः । स्त्री प्रहृष्टा मुनेर्मार्गं, पश्यन्ती बहिरागमत् ॥ ७ ॥

आगते च मुनौ भक्त्या, सा सुभोज्यं ददौ सती । तद्दृष्ट्वा तत्पतिः क्रोधात्, तद्दोषे कृतनिश्चयः ॥ ८ ॥
कोशात् खड्गं समाकृष्य, जगाद तरुणीम्प्रति । कुलटे ! वद सत्यं मे, सम्बन्धः कोऽस्त्यनेन ते ॥ ९ ॥
तदा सा विस्मिता नारी, भविष्यत्कथनस्य तत् । वार्त्तां सर्वां मुनेस्तस्मै, कथयामास विस्तरात् ॥ १० ॥
किन्तु तस्य कुबुद्धेर्नो, विश्वासोऽभून्मनागपि । कर्पन्नेवासिमाचख्यौ, मुनिं न्यत्कारयन् क्रुधा ॥ ११ ॥
मुने ! वदाशु सत्यं मे वडवा प्रसविष्यते । किमियं तद्वचः श्रुत्वा, किशोरीं मुनिरुक्तवान् ॥ १२ ॥
निर्णयार्थं ततो दुष्टः, खड्गेनाश्वां व्यदारयत् । किशोरी च तदश्वा च, सीदन्त्यौ मृतिमापतुः ॥१३॥
मुनिश्च स्वकृतेनैतदनर्थं सकलं विदन् । प्रायश्चित्तार्थमाश्वेवानशनं कृतवान् शुचा ॥ १४ ॥
पूर्वं पश्चाच्च संवीक्ष्य, फलाफलमथो वदेत् । ज्ञानी मुनिः प्रियं सत्य,—मन्यथाऽनर्थ उद्भवेत् ॥ १५ ॥

## ७६ श्री मानपिण्डकथा

सर्वलब्धियुतोऽसि त्व–मित्येवमन्यसाधुभिः । स्तुतो गर्वेण लोकेभ्यो, मानपिण्डोऽभियाचनात् ॥ १ ॥
क्षुल्लको मुनिरेकोऽभूत्, सैकदा हासतापितः । संलापे मुनिभिर्गर्वा,—दुवाच चाचारमस्मरन् ॥ २ ॥
गुडमिश्रां घृतेनाक्तां, कल्ये सेवतिकामहम् । आनेष्यामि प्रभूतां चा,— वश्यं जानन्तु योगिनः ॥ ३ ॥
एवं कृतप्रतिज्ञोऽसौ, प्रातर्गत्वेभ्यसद्मनि । सेवतिकां ययाचेऽसौ, घृताक्तां गुडमिश्रिताम् ॥ ४ ॥
तस्यां सत्यामपि यावत्, कृपणा न ददाति सा । तदा गर्वाज्जगौ योगी, नेष्याम्यहमिमां ध्रुवम् ॥ ५ ॥

साऽपि मोहाज्जगौं नारी, यद्येवं स्यात्तदा मया । घर्षणीया तदानासा, तच्छ्रुत्वोत्तेजितो मुनिः ॥ ६ ॥
देवदत्ताभिधं तस्याः, पतिं प्राप्य जगाद सः। षड्भ्यो यदीतरोऽसि त्वं, सप्तमश्चेत्ब्रुवे वचः ॥ ७ ॥
के ते षडिति पृष्टोऽसौ, मुनिरूचे यथाक्रमम् । षण्णां स्वरूपं वाक्येन, विशदेन विबोधयन् ॥ ८ ॥
याचिते भोजने पत्न्या, समादिष्टो दिवानिशम् । चुल्लिभस्मापनीयाग्नि,—ज्वालनादि क्रियां कुरु ॥ ९ ॥
तेन श्वेताङ्गुलिः स्त्रैणः, स श्वेताङ्गुलिरादिमः । लोकेषु कथितो मूर्खः, सदा स्त्रीपरिचारकः ॥ १० ॥
तडागात्प्रत्यहं वारि त्वयाऽऽनेयमिति स्त्रियाः। आज्ञयाऽह्नि ह्रिया नैव, रात्रौ किन्तु प्रयाति यः ॥ ११ ॥
उड्डयन्ते वकास्तेन, तडागे लोकविश्रुतः । द्वितीयोऽसौ बकोड्डायी, योषिदर्थेन स ध्रुवम् ॥ १२ ॥
स्नानाय सलिलं देहि,—त्येवं याचितया स्त्रिया । आदाय स्नानसामग्रीं, गच्छ स्नाहि सरोजले ॥ १३ ॥
ततश्च शीघ्रमागच्छे,—त्यादिष्टस्तत्र मज्जनात् । तीर्थस्नाता स्मृतो लोके, भार्याज्ञाया वशंवदः ॥ १४ ॥
किंकरोमीति पृष्टाया, भार्याया वचसोऽनिशम् । प्रेषणादिक्रियां कुर्वन्, किंकरोऽसौ स्त्रिया मतः ॥ १५ ॥
यो हि भार्यासमादेशा,—दपत्यानामहर्दिवम् । वस्त्रप्रक्षालनक्रीडा,—मूत्रोत्सर्गादि कारकः ॥ १६ ॥
तेन दुर्गन्धवस्त्रादि,—युतोऽसौ हृदनः स्मृतः । स्त्रीत्वेऽवशिष्यते यस्य, केवलं गर्भधारणम् ॥१७ ॥
भोजनायोपविष्टो यो, व्यञ्जनादीनि याचते । गृहाणेति स्त्रियाऽऽहूतो, रिङ्खन् याति तदन्तिकम् ॥ १८ ॥
गृध्ररिङ्खी जने ख्यातः, स भार्याभयविह्वलः । भार्याधीनाः षडेते ते, तेषु त्वमसि वा नहि ॥ १९ ॥
जगाद तद्वयस्कोऽन्य,—स्तत्रस्थो हास्यपूर्वकम् । षण्णां कार्यं करोत्येक—मेवासौ विद्धि निश्चितम् ॥ २० ॥

देवदत्तो जगादेत्थं, हास्यमेप करोति मे । निजाभीष्टं मुने ! ब्रूहि, यथाशक्ति करोमि तत् ॥ २१ ॥
गुडमिश्रां घृतेनाक्तां, देहि सेवतिकां तदा । याचितो मुनिनेत्थं स, स्वीकृत्योत्थाय चाऽचलत् ॥ २२ ॥
अवस्थाप्य मुनिं द्वारे, भार्यां कार्यान्तरच्छलात् । प्रेपयित्वाऽन्यतः सर्वं, मुनये याचितं ददौ ॥ २३ ॥
प्रसन्नः क्षुल्लकः पश्चात्, स्वनासाघर्पणेन ताम् । नासिकाघर्पणाय स्त्रीं, संज्ञयाऽसूचयद्द्रुतम् ॥ २४ ॥
परावृत्य ततो हृष्टो, गुणं लब्धि निजां भृशम् । मुनीनामग्रतो भूयो, भूयो गर्वादवर्णयत् ॥ २५ ॥
एकदाऽऽलोचनाकाले, पृष्टोऽसौ गुरुणा पुनः । मूलोत्तरगुणाः क्वापि, खण्डिताः किं त्वया वद ॥ २६
क्षुल्लकः प्रत्युवाचेत्थं गुरोः सत्यं वचस्तदा ॥ २७ ॥
मया सेवतिकाहेतो,—र्महानाडम्बरः कृतः । वर्जनीयः सदा सर्वै,—र्विषयाननुरागिभिः ॥ २८ ॥
श्रुत्वा प्राह गुरुः शिष्य !, मानपिण्डः सुसाधुभिः । सुश्रामण्ये सदा सक्तः चिरं विहृतवान् भुवि ॥ २९ ॥
आलोचनां ततो लात्वा मानपिण्डेऽसुको:मुनिः ।

## ७७ लोभपिण्डे सुव्रतमुनिकथा

चम्पापुरे मुनिः कश्चि,—द्दासीच्छ्रीसुव्रताभिधः । ययौ प्रथमपौरुष्यां, गौचरीं नेतुमाश्रमात् ॥ १ ॥
भ्रमन् ददर्श पुर्यन्तः, जायमानां प्रभावनाम् । स्वजनादौ तदा सिंह—केसरमोदकस्य सः ॥ २ ॥
दृष्ट्वा हृदि व्यचारयत्, सिंहकेसरमोदकाः । ग्राह्या मयेति निश्चित्य, भिक्षार्थं तत्र जग्मिवान् ॥ ३ ॥
प्राप्तो न मोदकस्तस्मा,—न्निर्विण्णस्याटतो मुनेः । मध्याह्नसमयो जातः, केसरानेव ध्यायतः ॥ ४ ॥

मोदकासक्तचित्तोऽसौ, नष्टसंज्ञो गृहे गृहे । धर्मलाभपदस्थाने, जगाद सिंहकेसराः ॥ ५ ॥
एवं सर्वं दिनं भ्रान्त्वा, रात्रौ च भ्रमति स्म सः । आचारं स्वं निसस्मार, मोदकानेव चिन्तयन् ॥ ६ ॥
भ्रमतोऽस्य व्यतीयाय, रजनीप्रहरद्वयम् । ततः श्राद्धगृहं गत्वा, प्रोवाच सिंहकेशराः ॥ ७ ॥
अभ्युत्थानादिकं कृत्वा, श्रावको ह्यचिन्तयत् । अतर्कितमकाले च, मुनेरागमनं कथम् ॥ ८ ॥
क्षपकोऽद्यैव दृष्टोऽसा,—वप्रमत्तो मया पुरा । धनादिपूरितं गेहं, त्यक्त्वा प्रव्रजितोऽतृपः ॥ ९ ॥
गीतार्थश्चाप्ययं साधु,—स्तदा रात्राविहागतौ । को हेतुस्तन्न जानामि, सहसेत्थमभूत्कुतः ॥ १० ॥
दोपानस्य सतो वच्मि, श्राद्धत्वं स्याच्च्युतं तदा । किञ्चागम्यं चरित्रं मे, महतां योगिनां सदा ॥ ११ ॥
परीक्षा किन्तु कार्या मे, किमस्ति हृदये मुनेः । विचिन्त्यैवं पुनर्दध्यौ, श्रावको धर्ममानसः ॥ १२ ॥
विषयाभिमुखी नास्य, चेष्टा नेहा धनेष्वपि । वस्त्रेणाच्छादितास्योऽसौ, भाषते क्राम्यति क्रमात् ॥ १३ ॥
अतो मूलगुणस्यायं, घातको नैव दृश्यते । किन्त्वाहाराभिकाङ्क्षाऽस्ति, ज्ञायते चेष्टितैः ! स्फुटम् ॥ १४ ॥
एवं विचार्य सुस्वादु, मिष्टान्नं विविधं पुरः । मुनेर्ढौकितवान् भक्त्या, श्रावको मतिमान् द्रुतम् ॥ १५ ॥
नेदं मर्माहमित्येवं, निषिध्दे मुनिना पुनः । श्राद्धो दध्यावयं साधु,—र्नास्ति मार्गच्युतो मनाक् ॥ १६ ॥
किन्त्वस्याभिग्रहः कोऽस्ति, ज्ञायतां तत्कथं मया । प्रवेशसमयेऽनेन, गदितं सिंहकेसराः ॥ १७ ॥
प्रायोऽलाभेन तस्यास्या नष्टं चित्तमभूद्ध्रुवम् । इत्थं विचार्य चित्तेऽसौ, श्रावको मुनये द्रुतम् ॥ १८ ॥
भाजनं मोदकैः पूर्ण,—मुपढौक्यावदत्ततः । गृहीत्वाऽनुग्रहं साधो !, कुरु त्वं सिंहकेसरान् ॥ १९ ॥

जग्राह तन्मुनिः स्वेच्छं, स्वस्थीभूतश्च तन्मनः । श्रावको हृदये दध्यां,—वाहारेऽस्य भवेत्क्षतिः ॥ २० ॥
अनेकदोषदुष्टं हि, कथितं रात्रिभोजनम् । अतस्तथा प्रकुर्वेऽहं, येनाऽस्य स्याच्छुभा मतिः ॥ २१ ॥
ततोऽसौ श्रावको युक्त्या, जगाद मुनिपुङ्गवम् । स्वामिन्नद्य महद्भाग्यं, ममास्ति सकले जने ॥ २२ ॥
जङ्गमाः कल्प—तरवो, यतो यूयं समागताः । चरित्रं हि सुधातुल्यं, सन्तोषश्चापि ते तथा ॥ २३ ॥
भवदीयगुणग्रामं, नाहमेकमुखो मनाक् । समर्थो वदितुं वर्स, विषयासक्तमानसः ॥ २४ ॥
प्रश्नस्यैकस्य मे किन्तु, देहि ध्यात्वोत्तरं मुने ! । गीतार्थोऽस्ति:भवान् यस्मा—त्तथाऽऽचारस्य पालकः ॥२५॥
प्रत्यूषे प्रत्यहं द्वित्र,—तारके गगने सति । प्रत्याख्यानं प्रकुर्वेऽहं, नमस्कारादिकस्य हि ॥ २६ ॥
प्रत्याख्यातं मया चाद्य—पूर्णं पुरिमार्धं नवा । तच्छ्रुत्वा सावधानोऽसौ, चिन्तयामासिवान् हृदि ॥ २७॥
श्रुतदत्तोपयोगेन, दृष्ट्वानुडुमण्डलम् । ज्ञाता यामद्वयातीता, मध्या रात्रिश्च सम्प्रति ॥ २८ ॥
जातं ततोऽस्य संज्ञानं ततोऽसौ स्वमनिन्दयत् । हा मूढेन मया सर्वं, विरूपं चरितं भ्रमात् ॥ २९ ॥
धिङ् मे लोभाभिभूतस्य, जीवितं पापसङ्कुलम् । इत्थं निर्वेदमापन्नो, जगाद श्रावकम्प्रति ॥ ३० ॥
जैनशासनतत्त्वज्ञो, धन्योऽसि श्रावकोत्तम ! । यतोऽनेन प्रच्छन्नेन, पातकाद्रक्षितोऽस्म्यहम् ॥ ३१ ॥
मार्गभ्रष्टस्य मे सद्यो, गुरुस्त्वं मार्गदर्शनात् । चातुर्यं च तथा धैर्यं, वचसोऽगोचरं तव ॥ ३२ ॥
इत्येवमात्मनिन्दां स, स्तुतिं तस्य विधाय च । निशायां गमने मे स्या,—दनाचार इति स्मरन् ॥ ३३ ॥
अन्विष्य विजनं वेश्म, तस्थौ ध्यानपरो मुनिः । प्रभाते च तदाहार,—परित्यक्तुं गतस्तथा ॥ ३४ ॥

शुद्धस्थण्डिलभूमौ स, विधिना चूर्णयन् भृशम् । मोदकान् भावनां दध्यौ, स ढण्ढणमुनिर्यथा ॥ ३५ ॥
शुक्लध्यानानलेनाशु, कर्मदारु दहन्मुनिः । क्षणमात्रेण सम्प्राप्तः, केवलं ज्ञानमुज्ज्वलम् ॥ ३६ ॥
देवैः स्वर्णाम्बुजं तत्र, विहितं सहसा मुनिः । देशनां प्रददौ स्थित्वा, तद्दृष्ट्वा विस्मिता जनाः ॥ ३७ ॥

## ७८ श्री नमिराजर्षिकथा

अस्तीह भ[भा]रते वर्षेऽवन्तीजनपदेऽद्भुतम् । पुरं सुदर्शनाभिख्यं, निर्जितस्वःपुरं श्रिया ॥ १ ॥
राजा मणिरथस्तत्र, युवराड् युगबाहुकः । प्रिया मदनरेखाऽस्य, रूप–लावण्यदीर्घिका ॥ २ ॥
तस्याश्चन्द्रयशाः सूनुरनूनगुणसेवधिः । राजा मदनरेखायां, रागादिदमचिन्तयत् ॥ ३ ॥
चेद् रेमे नैतया सार्धं, तदा मे निष्फलं जनुः । ततस्तदर्थमेतस्यै, प्रैषीत् पुष्प–फलादिकम् ॥ ४ ॥
ज्येष्ठप्रसाद इति सा, निर्विकारा तदाददे । अन्येद्युर्मदनरेखां, रहो मणिरथोऽवदत् ॥ ५ ॥
भद्रे ! मां पुरुषत्वेन, प्रपद्य स्वामिनी भव । मद्राज्यस्येति साऽवोचत्, पुंस्त्वमस्त्येव पार्थिव ! ॥ ६ ॥
स्वकर्मणैव पण्ड–स्त्रीभावशून्यस्य ते पुनः । स्वामित्वं युवराट्पत्न्याः, कः क्षमो हर्तुमत्र मे ? ॥ ७ ॥ युग्मम्
अन्यच्च मृत्युमिच्छन्ति, सन्तोऽकृत्यं न कुर्वते । तत् त्यज त्वं महाराजाकार्यं भजस्व सत्पथम् ॥ ८ ॥
तत् श्रुत्वा चिन्तितं तेन, पाप्मना मामियं ध्रुवम् । नेच्छति भ्रातरि सति, हन्मि तं स्यात् ततो मतम् ॥ ९ ॥
अन्येद्युर्मदनरेखा, स्वप्ने दृष्ट्वा निशाकरम् । भर्तुराख्यच्च सोऽप्याह, प्रिये ! भाव्यद्भुतः सुतः ॥ १० ॥

तदैवाऽऽविरभूद् गर्भस्तृतीये मासि चाभवत् । जिनार्चा–मुनिदानादौ, दोहदोऽस्याः सुकर्मजः ॥ ११ ॥
सम्पूर्णदोहदा गर्भं, दधाना सा सती सुखम् । अनैषीत् समयं पत्युः, प्रेमानुस्यूतमानसा ॥ १२ ॥
वसन्तेऽन्येद्युरुद्याने, जगाम युगबाहुराट् । व्यग्रत्वाद् भक्तपानाद्यैस्तस्यास्तमगमद् रविः ॥ १३ ॥
काष्ठासु प्रसृतं ध्वान्तं, युगबाहू रति(त)श्रमात् । सुप्तो रम्भागृहे सार्द्धं, प्रियामदनरेखया ॥ १४ ॥
अथो मणिरथो दुष्टश्चिन्तयामास चेतसि । अद्याऽऽस्ते शोभनोपायो, युगबाहुविनाशने ॥ १५ ॥
एकं स बहिरुद्याने, स्थितोऽन्यत् चाल्पसेवकः । तृतीयं रजनी(निर्)ध्वान्तं, चतुर्थं हन्मि तेन तम् ॥ १६ ॥
चिन्तयित्वेत्युपादाय, मण्डलाग्रं स उग्रधीः । उद्यानेऽगमदेकाकी, दृष्टः पृष्टोऽङ्गरक्षकैः ॥ १७ ॥
विश्वस्तं घातयत्येनं, माऽनुजं मेऽपरः परः । इत्यागतः पुरान्तस्तं, लात्वा यास्यामि साम्प्रतम् ॥ १८ ॥
दम्भाद् रम्भागृहं सोऽगाद्, युगबाहुः ससम्भ्रमम् । उत्थाय प्रणमन्नुक्तस्तेन यावः पुरान्तरे ॥ १९ ॥
जनापवादमुत्सृज्याविचार्यानार्यकार्यताम् । स पुरान्तर्गमव्यग्रस्तेन स्कन्धे हतोऽसिना ॥ २० ॥
तद्व्यथार्त्तः पपातोर्व्यां, सोऽथो मदनरेखया । पूच्चक्रेऽभ्येयुराकृष्टखड्गास्तस्याङ्गरक्षकाः ॥ २१ ॥
प्रमादात् मत्कराद् भद्रे !, पपातासिर्भिया सृतम् । ज्ञात्वा तच्चेष्टितं भृत्यैर्नीतो मणिरथः पुरे ॥ २२ ॥
तैश्चन्द्रयशसः प्रोक्तं, क्रन्दन्नुच्चैः स आगमत् । वैद्यानादाय तैश्चक्रे, व्रणकर्मार्चितः परम् ॥ २३ ॥
नेत्रे निमीलिते रुद्धा, वाग् निश्चेष्टमभूद् वपुः । रुधिरोद्गारतः श्वेता, युगबाहोरभूत् तनुः ॥ २४ ॥
अन्त्यावस्थोचितं ज्ञात्वा कामरेखा ततः पतिम् । स्थित्वा तत्कर्णयो–र्मूलमुवाचैवं मृदुस्वरम् ॥ २५ ॥

राजन् ! कस्योपरि द्वेषं, मा कुर्याः प्रीतिमङ्गिषु । भजस्व चतुःशरणं, निर्वृतिं चेतसो भज ॥ २६ ॥
स्वकृतं दुष्कृतं निन्द, सह व्यसनमागतम् । निमित्तमात्रमत्र स्यात्, परः स्व(स्वं) कर्म भुज्यते ॥ २७ ॥
पाथेयं परलोकस्य, स्मराऽर्हन्तं गुरुं वृषम् । दुष्टान्यष्टादश स्पष्टं, पापस्थानानि वर्जय ॥ २८ ॥
पितृ-मातृ-भ्रातृ-पुत्रादिकं सङ्गव्रजं त्यज । स्मर पञ्चनस्कारं, सारं श्रीजिनशासने ॥ २९ ॥
तत् कृताञ्जलिना सर्वं, प्रपन्नं युगबाहुना । ममार च नमस्कार-जापसारः समाधिना ॥ ३० ॥
पूत्कृतं चन्द्रयशसा, कामरेखेत्यचिन्तयत् । मद्रूपं धिक् कृते यस्यानर्थोऽभूदीदृशो महान् ॥ ३१ ॥
व्यापादयिष्यति क्रूरो, मत्पुत्रमपि मत्कृते । शीलरत्नं तदात्मीयं, गत्वा रक्षामि कुत्रचित् ॥ ३२ ॥
चिन्तयित्वेति पुत्रादि-वर्गं शोकात्मतां गतम् । सम्बोध्यार्द्धनिशि दिशं, प्रतीचीं प्र(प्रति प्राचीं)चचाल सा ॥३३॥
क्रूराटव्यामटन्त्याप, मध्याह्नेऽब्जसरः पुरः । प्राणवृत्तिं फलैश्चक्रे, बलीयो दैवचेष्टितम् ॥ ३४ ॥
साकारानशनं कृत्वा, सा सुप्ता कदलीगृहे । आगता रजनिस्तत्र, पूत्कुर्वन्ति मृगारयः ॥ ३५ ॥
घुर्घुरन्ति वराहौघाः, फेत्कारान् विदधुः शिवाः । नमस्कारपरावर्त्तपरायत्ता मनस्विनी ॥ ३६ ॥
अर्द्धरात्रे बभूवास्या, महत्युदरवेदना । सर्वलक्षणसम्पूर्णं, प्रसूता सा ततः सुतम् ॥ ३७ ॥
सं(सा)वेष्ट्य कम्बलेनैनं, मुद्रां न्यस्यामुचत् पितुः । स्वयं गता सरः प्रातः, क्षालितं वस्त्रमात्मनः ॥ ३८ ॥
स्नानार्थं यावदुत्तीर्णा, तावदागात् पयःकरी । तेनैषा शुण्डयोत्पाट्य, लीलयोल्लालिताऽम्बरे ॥ ३९ ॥
दैवादात्ता सुरूपेति, खेचरेण पतन्त्यसौ । रुदन्ती(ती) सुदती नीता, तेन वैताढ्यभूधरम् ॥ ४० ॥

रुदन्त्या(त्या)ऽसौ तया प्रोक्तो, भो(ऽहो!) महापुरुषाऽऽत्मजम् । अद्य रात्रौ प्रसुताऽहं, तं मुक्त्वा कदलीगृहे ॥४१॥
स्नानार्थं यावदुत्तीर्णा, क्षिप्ता तावद् गजेन खे । त्वया यावदिहाऽऽनीता, त्वदधीनाऽस्मि साम्प्रतम् ॥४२॥ (युग्मम्)
व्यापादयिष्यते वन्यैर्निस्तन्यो वा मरिष्यति । मत्सूनुस्तस्य दानेनानुग्रहं कुरु सत्तम ! ॥ ४३ ॥
तमानयात्र वा तत्र, मां नयेत्युदिते तया । युवाऽऽहाऽऽज्ञाकरस्ते स्यां, यदीच्छसि पतिं तु माम् ॥ ४४ ॥
अन्यच्च शृणु गा(ग)न्धारदेशे रत्नावहे पुरे । मणीचूडो नृपस्तस्य, पत्न्यभूत् कमलावती ॥ ४५ ॥
मणीप्रभोऽस्य पुत्रोऽहं द्वयोः श्रेण्योः पिता मम । भुक्त्वा साम्राज्यं प्राव्राजीत्, चारणश्रमणान्तिके ॥ ४६ ॥
विहरन् स्वमिहाऽऽयातः, सोऽगात् नन्दीश्वरेऽधुना । गच्छता वन्दनायास्य, दृष्टा नीता मया ह्यसि ॥ ४७ ॥
त्वत्सूनुर्मिथिलेशेन, तत्राऽऽनीतेन वाजिना । गृहीतश्चार्पितो देव्यै, वर्द्धमानोऽस्ति पुत्रवत् ॥ ४८ ॥
प्रज्ञप्त्या विद्यया ज्ञात्वा, मयोक्तं नान्यथा ह्यदः । भद्रे ! मुक्त्वा तदुद्वेगं, भुङ्क्ष्व भोगान्मया समम् ॥ ४९ ॥
श्रुत्वेति सा सती दध्यावहो ! मे कर्मचेष्टितम् । भनाम्यन्यान्यदुःखानां, भाजनं भाग्यवर्जिता ॥ ५० ॥
न प्राणी मदनग्रस्तः, कार्याकार्यं विचारयेत् । नापवादाद् बिभेत्युच्चैः, शङ्कते नान्यलोकतः ॥ ५१ ॥
तत् शीलरत्नं यत्नेन, रक्षणीयं मयाऽधुना । चिन्तयित्वेति मदनरेखोचेऽदो मणिप्रभम् ॥ ५२ ॥
नय नन्दीश्वरं तावत्, करिष्ये त्वद्वचो ध्रुवम् । तत् श्रुत्वा मुदितो दिव्यं, यानं व्यरचयत् खगः ॥ ५३ ॥
तदारोप्य सतीं स्वान्तवेगं वेगादगात् खगः । नन्दीश्वरं द्विपञ्चाशच्चित्यचैत्यविभूषितम् ॥ ५४ ॥
ववन्दे तत्र कृत्वाऽर्चां, तया सार्द्धं मणिप्रभः । ऋषभ–वर्द्धमानाद्याः, प्रतिमाः शाश्वतार्हताम् ॥ ५५ ॥

वन्दितो मणिचूडोऽपि, मुनिस्ताभ्यां ससम्भ्रमम् । चतुर्ज्ञानधरः सोऽप्यज्ञासीद् व्यतिकरं तयोः ॥ ५६ ॥
शिक्षितो(शमितो) मणिचूडेन, धर्मदेशनया खगः । लज्जितस्तां सतीमूचे, भगिनीतः प्रभृत्यपि[सि] ॥ ५७ ॥
ब्रूहि सम्प्रति किं कुर्वे ?, साऽब्रवीत् मेऽखिलं कृतम् । अत्र कारयता यात्रां, तीर्थे मत्तुल्यदुर्लभे ॥ ५८ ॥
उत्पत्तिं वद मत्सूनोः, साऽपृच्छदिति तं मुनिम् (:) । सोऽप्याह प्राग्विदेहेऽभूद्, विजयः पुष्कलावती ॥ ५९ ॥
तत्र मणितोरणाख्ये, पुरेऽमितयशा नृपः । तस्य पुष्पवती पत्नी, रूपरेखाकपोपला ॥ ६० ॥
पुष्पसिंह–रत्नसिंहौ; बुभुजाते तदात्मजौ । साम्राज्यं चतुरशीति–पूर्वलक्षा निरर्गलम् ॥ ६१ ॥
प्रवव्रजतुरभ्यर्णे, चारणर्षेर्विरागतः । षोडशपूर्वलक्षास्तौ, पालयामासतुर्व्रतम् ॥ ६२ ॥
ततो मृत्वाऽच्युते कल्पेऽभूतां सामानिकौ सुरौ । द्वाविंशत्यर्णवायुष्कौ, निस्सीमसुखशालिनौ ॥ ६३ ॥
च्युत्वेतो धातकीखण्डभरतार्द्धेऽर्द्धचक्रिणः । पत्युः समुद्रदत्ताया, हरिषेणाभिधस्य तौ ॥ ६४ ॥
तनयौ सागराद् देव–दत्तौ नाम्ना बभूवतुः । क्रमात् क्रमागतं राज्यं, पालयामासतुश्चिरम् ॥ ६६ ॥ युग्मम्
ततस्तौ द्वादशस्यान्ते, श्रीदृढसुव्रतार्हतः । व्रतं जगृहतुर्जन्मसाफल्यार्थमुभावपि ॥ ६६ ॥
मृत्वोत्पन्नौ महाशुक्रे, विद्युत्पातेन तद्दिने । सप्तदशार्णवायुष्कौ, तौ सुरौ परमर्द्धिकौ ॥ ६७ ॥
द्वाविंशस्यार्हतो जातकेवलस्यान्यदा मुदा । गतौ तौ महिमां कर्त्तुं, पृच्छतः स्म निजाऽऽयतिम् ॥ ६८ ॥
स्वाम्याह भरतेऽत्रैव, च्युत्वेतो मिथिलापुरि । भूभुजो जयसेनस्य, त्वमेको भविता सुतः ॥ ६९ ॥
सुदर्शन(ने)पुरे चान्यो युगबाहोर्महीपतेः । पत्न्या मदनरेखाया, भावी पुत्रस्ततश्च्युतः ॥ ७० ॥

इति श्रुत्वा प्रभुं नत्वा, जग्मतुस्तौ त्रिविष्टपम् । भुक्त्वा देवभवायुष्कं, पूर्वमेकस्ततश्च्युतः ॥ ७१ ॥
उत्पेदे मिथिलापुर्यां, जयसेनमहीपतेः । प्रियायां वनमालायां, पुत्रः पद्मरथाह्वयः ॥ ७२ ॥
यौवने जनको राज्यं, दत्त्वाऽस्मै व्रतमग्रहीत् । पुष्पमालाप्रिययाऽमा, स भोगान् बुभुजेऽधिकम् ॥ ७३ ॥
द्वितीयोऽपि ततश्च्युत्वा, पुत्रो धार्मिकि ! तेऽभवत् । हृतः पद्मरथोऽन्येद्युर्वक्रशिक्षितवाजिना ॥ ७४ ॥
तत्राटव्यामटन्नागादद्य प्रातस्तवाऽऽत्मजम् । दृष्ट्वा पूर्वभवस्नेहात्, मुदितात्मा तमाददे ॥ ७५ ॥
पदानुसारतस्तस्यात्रान्तरे सैन्यमागतम् । सतन्त्रो गजमारुह्य, राजाऽगाद् राजमन्दिरम् ॥ ७६ ॥
प्रियायै पुष्पमालायै पालनायार्पितः सुतः । सवर्द्धापनकं वर्द्धमानोऽस्ति तद्गृहे सुखम् ॥ ७७ ॥
यावत् मुनिरिदं वक्ति, तावदेकं नभस्तलात् । विमानरत्नमुत्तीर्णं, द्युतिद्योतितदिक्तटम् ॥ ७८ ॥
किङ्किणीक्वाणमुखरं, स्वःस्त्रीघुष्टजयस्वरम् । स्वच्छस्फटिकनिर्यूहं, मुक्ताजालकरम्बितम् ॥ ७९ ॥ [युग्मम्]
तदन्तर्निर्ययौ देवः, कुण्डलालङ्कृतश्रुतिः । किरीटसुभगाकारस्तारहारमनोहरः ॥ ८० ॥
स त्रिः प्रदक्षिणीकृत्य, कामरेखां नमोऽकरोत् । पश्चात् मुनिं नमस्कृत्योपविष्टः पुरतो मुनेः ॥ ८१ ॥
वैपरीत्यं तदालोक्य, खेचरः सुरमब्रवीत् । अहो ! प्ररूपिता राजनीतयश्चामरैर्नृपैः ॥ ८२ ॥
लुम्पन्ति तास्त एवात्र, कस्याग्रे कथ्यते ततः ? । इति श्रुत्वा सुरोऽवोचत्, सत्यमेतत् परं शृणु ॥ ८३ ॥
सुदर्शनपुरे पूर्वमासीत् मणिरथो नृपः । तद्भ्राता युगबाह्वाह्वः, स तूद्याने गतोऽन्यदा ॥ ८४ ॥
केनचित् पूर्ववैरेण, कन्धरायां हतोऽसिना । भ्रात्रा(ता)मणिरथेनाथ, धर्मदेशनयाऽनया ॥ ८५ ॥

बोधितः स्प(स्पृ)ष्टसम्यक्त्वो, मृत्वा कल्पे स पञ्चमे । इन्द्रसामानिको जज्ञे, दशाब्ध्यायुर्महर्द्धिकः ॥८६॥ [युग्मम्]
सोऽहं तदेषा मे धर्माचार्यत्वेनोपकारिणी । यद् भवेद् दुष्प्रतीकारो, बोधिबीजार्पको जनः ॥ ८७ ॥
अतो नतोऽहमेतस्याः, पूर्वमेव पदद्वयम् । तत् श्रुत्वा खेचरो दध्यावहो ! धर्मस्य जृम्भितम् ॥ ८८ ॥
कामरेखां सुरोऽवोचत्, करवाणि तव प्रियम् । किं साधर्मिकि ! श्रुत्वेति, साऽवगेवं सुरं प्रति ॥ ८९ ॥
देवेन्द्रः परमार्थेन, न प्रियं कर्त्तुमीश्वरः । तथापि नय मां तत्र, यत्राऽऽस्ते मत्सुतो लघुः ॥ ९० ॥
परलोकहितं कुर्वे, यथाऽहं वीक्ष्य तन्मुखम् । नीता क्षणात् सुरेणाथ, ततोऽसौ मिथिलापुरि ॥ ९१ ॥
जन्म-दीक्षा-ज्ञानभूमिर्मल्लि-नम्यर्हतोस्तु सा । अतोऽवतारिता पूर्वं, तीर्थभक्त्याऽर्हदालये ॥ ९२ ॥
तया नतानि चैत्यानि, साध्व्यश्चोपाश्रये नताः । पुरस्तात् कथितो धर्मस्तस्यास्ताभिर्जिनोदितः ॥ ९३ ॥
उक्ता धर्मकथाप्रान्ते तेन देवेन सा सती । भद्रे ! यामो नृपावासे, पुत्रं पश्येति साऽवदत् ॥ ९४ ॥
संसारवर्द्धनेनालं !, प्रेम्णाऽऽदास्ये व्रतं हितम् । स्वाभीष्टं कुरु देवोऽपीत्युक्त्वा नत्वाऽगमद् दिवम् ॥ ९५ ॥
तासामन्ते तयाऽप्यात्तं, वैराग्यादार्हतं व्रतम् । तपस्यन्ती विजह्रेऽसौ सुव्रतार्याऽऽख्यया क्षितौ ॥ ९६ ॥
अथो पद्मरथावासे, तिष्ठत्येष सतीसुतः । प्रतिपक्षा नतास्तस्य, स्वयमेवोपदादिभिः ॥ ९७ ॥
ततोऽस्य गुणनिष्पन्नं, चक्रे नाम नमिर्नृपः । धात्रीभिः पञ्चभिर्लाल्यमानोऽवर्द्धिष्ट सत्सुखम् ॥ ९८ ॥
सर्वशास्त्रार्थसार्थं स, प्राप्तवानष्टवार्षिकः । क्षणाद् दर्शनमात्रेण, प्राच्यपुण्यानुभावतः ॥ ९९ ॥
अष्टोत्तरसहस्राणां, कनीनां ग्राहितः करम् । इक्ष्वाकुवंशजातानां, भूभुजां यौवने नमिः ॥ १०० ॥

॥ १०१ ॥

सुरेन्द्र इव भुञ्जानो, भोगांस्ताभिः समं नमिः । अनैषीत् सुखजं कालमथो पद्मरथोऽपि हि ॥ १०२ ॥
विदेहदेशजे राज्येऽभिषिच्य युगबाहुजम् । संसारासारतां ज्ञात्वा, प्रव्रज्याऽऽप शिवश्रियम् ॥ १०३ ॥
अथो मणिरथो रात्रौ, तस्यां दष्टो महाहिना । चतुर्थ्यां नरकपृथ्व्यां, मृत्वोत्पेदेऽतिपाप्मतः ॥ १०४ ॥
संस्कारितावुभौ मन्त्रि–सामन्ताद्यैः सहोदरौ । न्यस्तश्चन्द्रयशा राज्ये, कथञ्चित् प्रतिबोधितः [-ध्य तैः ॥ १०५ ॥
इतश्चालानमुन्मूल्य, श्वेतेभो नमिभुभुजः । अभि विन्ध्याटवीं गच्छन्, सुदर्शनपुरान्तिके ॥ १०६ ॥ युग्मम्
दृष्टो गतैश्च वाह्याल्यां, चन्द्रयशोऽनुजीविभिः । उक्तोऽस्मै सोऽपि तं गत्वा, निनाय स्वपुरं रयात् ॥ १०७ ॥
चरैर्ज्ञात्वा नमेरुक्तं, स चन्द्रयशसे जनम् । प्राहिणोत् मद्गजं देहि, तस्मै सोऽपीदमब्रवीत् ॥ १०८ ॥
रत्नानि शासने न स्युः, कस्यापि लिखितानि भोः ! । यो बलेनाधिकस्तानि, तस्यैवेत्यत्र निर्णयः ॥ १०९ ॥
गत्वा दूतेन तत् प्रोक्तं, नमिराजस्ततोऽनमिः । क्रुद्धः सर्वबलेनालमचालीदग्रजोपरि ॥ ११० ॥
अथ चन्द्रयशा ज्ञात्वाऽऽगच्छन्तं कटकं नमेः । निर्गच्छन् स्वबलेनापशकुनेन निवारितः ॥ १११ ॥
पिधाय नगरद्वारं, तिष्ठेत्युक्तः स मन्त्रिभिः । कालोचितं करिष्यामः, पुनर्नावसरोऽधुना ॥ ११२ ॥
तस्थौ नमिश्चतुर्दिक्षु, पुरमावेष्ट्य सेनया । अश्रौषीत् सुव्रतार्याऽपि, जनश्रुत्याऽसुखं तयोः ॥ ११३ ॥
मा मनुष्यक्षयं कृत्वा, यातामेतावधोगतिम् । इतिप्रवर्त्तिनीं पृष्ट्वा, साऽगात् तद्बोधहेतवे ॥ ११४ ॥
पूर्वं प्राप्ता बहिः सैन्ये, ततोऽस्या दत्तमासनम् । नत्वोपविष्टो भूपीठे, नमिराजः कृताञ्जलिः ॥ ११५ ॥
साऽऽह राजन्नसारेयं, राज्यश्रीर्विषया विषम् । तत्कृते नरके दुःखसहनं युज्यते कथम् ? ॥ ११६ ॥

अन्यच युज्यते युद्धं, ज्येष्ठभ्रात्रा समं कथम् ? । कथं भ्रातेति तेनोक्ते, तं सप्रत्ययमाह सा ११६ ॥
तथापि सन्मुखं तस्य, न मानाद् यात्यसावथ[सौ ततः] । साऽऽर्या खडकि[क्कि]काद्वारा, प्रविष्टाऽन्तःपुरं द्रुतम्॥
प्रविशन्ती नृपावासे, स्वजनैः सोपलक्षिता । नत्वा दत्त्वाऽऽसनं चन्द्रयशाः पुर उपाविशत् ॥ ११८ ॥
ननामान्तः- पुरीलोको, गलद्बाष्पाविलः पदौ । एतां नृपोऽपृच्छदार्ये !, दुष्करं किं श्रितं व्रतम् ? ॥ ११९ ॥
कुत्रेदानीं मम भ्राता ?, रुद्धो येनेति साऽवदत् । निर्गतो नगरात् चन्द्र—यशा हर्षप्रकर्षतः ॥ १२० ॥
आयान्तं[तं]तं नमिर्वीक्ष्य, द्रागुत्थायापतत् पदोः । परमप्रेमनिर्मग्नौ, प्रविष्टौ भ्रातरौ पुरम् ॥ १२१ ॥
अवन्तीदेशस्वामित्वे, न्यस्य चन्द्रयशा नमिम् । प्रव्रज्य सुगुरुपान्ते, विजहार यथासुखम् ॥ १२२ ॥
भुञ्जानोऽभवदुग्राज्ञो, नमिर्देशद्वयश्रियम् । जज्ञे पाण्मासिको दाघज्वरोऽस्याङ्गेऽन्यदोत्कटः ॥ १२३ ॥
विज्ञैरप्यौपधविधेः, प्रत्याख्यातश्चिकित्सकैः । घर्षन्ति चन्दनं देव्य आलेपाय महीभुजः ॥ १२४ ॥
तद्धस्तकङ्कणझणज्झणद्ध्वनिभिरास्पदम् । पूर्येते प्राह राजेभिः, कर्णाघातो भवेत् मम ॥ १२५ ॥
ततो देवीभिरेकैकं, भुञ्चन्तीभिः स्वकङ्कणम् । सर्वाण्युत्तारितान्येकं, माङ्गलिक्याय रक्षितम् ॥ १२६ ॥
शब्दायन्ते न किं तानि, राज्ञा पृष्टेऽवदन् स्त्रियः । उत्तारितानि तान्येकं, देव शब्दायते नहि ॥ १२७ ॥
तद्दुःखाभ्याहतो दध्यौ, परलोकसुखोन्मुखः । अयं दोषो बहूनां ते, कलहायन्ते न चैककः ॥ १२८ ॥
उक्तं च—"यथा यथा महत्तन्त्रं, परिकरश्च यथा यथा । तथा तथा महादुःखं[-हद्दुःखं], सुखं च न तथा तथा [१]"॥
एतेभ्यो यदि रोगेभ्यो, मोक्षो मे प्रव्रजामि तत् । चिन्तयित्वेत्यसौ सुप्तो, राकाऽभूत् कार्त्तिकी तदा ॥ १३० ॥

प्रभातायां निशीथिन्यां, श्वेतेभं मन्दरोपरि । तस्मिन्नारूढमात्मानं, स्वप्ने, पश्यति(ऽपश्यत् स) पार्थिवः ॥ १३१ ॥
प्रबुद्धस्तूर्यशब्देन, नीरोगस्तत्क्षणादभूत् । दध्यौ लब्धोऽधुना स्वप्नः, प्रधानमधिकं मया ॥ १३२ ॥
दृष्टः क्वापीदृशश्चाभूत् पर्वतः सुभगाकृतिः । इत्यूहापोहवशतो, जातिस्मृतिमवाप सः ॥ १३३ ॥
विमाने पुष्पोत्तरे प्राच्य(ग्)भवेऽभूवं सुरैः समम् । जिनजन्ममहे तत्र, गतोऽहं मन्दराचले ॥ १३४ ॥
दृष्टस्तत्रायमित्येष, प्रबुद्धश्चिन्तयन् भृशम् । प्रत्येकबुद्धो भगवान्, प्राव्राजीत् स्वयमेव सः ॥ १३५ ॥

इति श्रीमुद्रित–ऋषिमण्डलवृत्तित उद्धृता श्री नमिराजर्षिकथा संपूर्णा.

## ७९ श्री अतिमुक्तकमुनिकथा

अस्तीह भरतक्षेत्रे, पोलासं नाम पत्तनम् । कमलालङ्कृतं सारं, कासार इव यत् सदा ॥ १ ॥
तत्र शत्रुधरित्रीशकुरङ्गत्रासकेसरी । सदाजयो जयो राजा, राजेवाऽऽनन्दकृत् सताम् ॥ २ ॥
श्रीदेवीव हरेस्तस्य, श्रीदेवी देव्यभूत् प्रिया । या जिगाय जगद्योषित्सौभाग्यं रूपरेखया ॥ ३ ॥
साऽन्यदा द्रुममद्राक्षीद्, रात्रौ स्वप्नेऽतिमुक्तकम् । तदैव दैवतो गर्भं, मञ्जरीव फलं दधौ ॥ ४ ॥
सम्पूर्णलक्षणं सम्पूर्णे दिनेऽसूत सा सुतम् । स्वप्नेऽतिमुक्तको दृष्टोऽभूत् नाम्ना सोऽतिमुक्तकः ॥ ५ ॥
मरालबालवत् पद्मं, पद्मादङ्कमथाङ्कतः । सञ्चरन् सोऽन्ववर्द्धिष्ट, सार्द्धं[माता]पित्रोर्मनोरथैः ॥ ६ ॥
हसंश्चप्पुटिकादानाद्, जल्पन् मन्मनभाषया । पितुः कूर्चकचान् कर्षन्, सोऽभवद् द्वित्रिवार्षिकः ॥ ७ ॥

इतश्च चरमतीर्थकरो वीरजिनेश्वरः । विहरन् समवासार्षीदित्योद्याने‌ऽन्यदा पुरः ॥ ८ ॥
जयं वर्द्धापयामासागमेनाऽऽरामिकोऽर्हतः । नृपो ननर्त्त तत् श्रुत्वा, केकीव जलदध्वनिम् ॥ ९ ॥
ततोऽस्मायनृणीकारं, दानं दत्त्वा मुदा नृपः । चचाल श्राक् मनोऽभीष्टे, ह्यौत्सुक्यं जन आगते ॥ १० ॥
स त्रिः प्रदक्षिणीकृत्य, नृपो वीरं नमोऽकरोत् । यथास्थानं निषण्णश्च, पपौ तद्देशनामृतम् ॥ ११ ॥
कैश्चिद् यतित्वं श्राद्धत्वं, सम्यक्त्वं कैश्चिदाश्रितम् । निशम्य देशनां पात्रे, न्यस्ता हि न मुधा सुधा ॥ १२ ॥
अहो रूपं स्फुरद्रूपमहो ! वाग्वैभवोद्भवम् । जैनान् जनो गुणान् गृह्णन्नित्यादीन् स्वाऽऽस्पदं ययौ ॥ १३ ॥
इतश्च षष्ठतपसः, पारणार्थी जगद्गुरुम् । आपृच्छ्य गौतमोऽविक्षत्, पुरान्तः श्रेयसां निधिः ॥ १४ ॥
अतिमुक्तकुमारोऽपि, कुमारैः स्ववयःसमैः । सुवर्णकन्दुकक्रीडां, तदा चक्रे नृपाध्वनि ॥ १५ ॥
धावं धावं विशश्राम, श्रान्तच्छायासु सद्मनः । प्रविष्टं गोचरेऽद्राक्षीत्, कुमारो गौतमं मुनिम् ॥ १६ ॥
स्वभावाद् विनयो राजपुत्रे स्यादित्यसौ शिशुः । द्रागुत्थाय नमश्चक्रे, गौतमांघ्री उवाच च ॥ १७ ॥
के यूयं ? कुत्र वसथ ?, भ्राम्यथेत्थं कथं पुरे ? । स्वाम्याख्यत् साधवः साधो !, वसामोऽन्त्यार्हतोऽन्तिके ॥१८॥
पर्यटामश्च भिक्षार्थमुच्च-नीचकुलेऽन्वहम् । तत् श्रुत्वाऽऽह कुमारोऽसौ, प्राश्वद्रोमांश्चकञ्चुकः ॥ १९ ॥
तर्ह्यायात ममाऽऽवासे, यद् भिक्षां दापयामि वः । इत्युक्त्वाऽऽकृष्य हस्ताभ्यां, वेश्मनेऽचालयत् स तम् ॥२०॥
दूराद् गुरुकरच्छन्नशीर्षमायान्तमात्मजम् । वीक्ष्याभूद् विकसद्गात्रा, प्रसूः प्रसूनवद् भृशम् ॥ २१ ॥
ततः श्रीदेवी देवीव, गुर्वालोकेऽनिमेषदृक् । भक्त्या मुनिं नमस्कृत्य, मोदकैः प्रत्यलाभयत् ॥ २२ ॥

राजग्रः पुनरपृच्छत्, क यूयं यास्यथाधुना ? । गुरुराह गुरूपान्ते, तत्राऽऽयाम्यस्मि सोऽप्यवक् ॥ २३ ॥
गाहः प्रभुः प्रभूपान्ते, तमादायाभेकं ततः । धर्माख्यानाम्भसाऽऽरेभेऽरजसं कर्तुमीश्वरः ॥ २४ ॥
अस्मिन्नसारे संसारे, सारं किञ्चिन्न वीक्ष्यते । यौवनं जीवितं देहो, धनं सर्वमशाश्वतम् ॥ २५ ॥
भोगा रोगावहा योगा, योगिनां न सुखावहाः । कुशाग्रलग्नपानीयबिन्दुवत् चाऽऽयुरस्थिरम् ॥ २६ ॥
धर्म एवार्हतोऽशेषदुःखखानिक्षयक्षमः । तत्रापि सारं चारित्रमचिरात् मोक्षसौख्यदम् ॥ २७ ॥
एवमर्हद्वचोदीपदृष्टस्पष्टार्थनिश्चयः । ऊचे च गृहमेत्यादः, पितरावतिमुक्तकः ॥ २८ ॥
शुश्रुवेऽद्य मया वाणी, पितरौ ! चरमार्हतः । मोहनिद्रातमश्छेदे, सहस्रकरसोदरा ॥ २९ ॥
तयोन्मीलितनेत्रोऽहमादास्येऽथाऽऽर्हतं व्रतम् । तावूचतुर्वत्स ! वेत्सि, कथं धर्मं त्वमर्भकः ? ३० ॥
सोऽवग् यदेव जानामि, तदेवापि न वेद्म्यहम् । यद् जाने न तदेवाहं, वेद्मीति परमार्थतः ॥ ३१ ॥
ऊचतुः पितरौ वत्स !, कथं ब्रूपेऽसमञ्जसम् ? । सोऽवादीत् पितरौ ! जाने, जातस्य मरणं ध्रुवम् ॥ ३२ ॥
कदा कस्य ? कथं वेति ?, सम्यगेतन्न वेद्मि नु । न वेद्मि यान्ति कैः श्वभ्रे ?, कर्मभिर्यान्ति वेद्म्यपि ॥३३॥
अथो नृपोऽन्वदत् पुत्र !, कर्कशक्लेशकारिणीम् । दीक्षां कक्षीकरोपि त्वं, कदलीकोमलः कथम् ? ॥ ३४ ॥
पञ्चोत्पाट्या यमाश्चाङ्गे, गुरवः पञ्च मेरवः । तथा शीलभरोऽश्रान्तं, कचलोचोऽतिदुष्करः ॥ ३५ ॥
सोढव्या दुस्सहा बाढं, द्वाविंशतिः परीषहाः । रूक्षं भैक्ष्यं भवेद् भक्ष्यं, समत्वं मित्र–शत्रुषु ॥ ३६ ॥
शोभतेऽवसरे सर्वं, भुक्तभोगश्चरेर्व्रतम् । तत् पुत्रात्राऽऽग्रहं मुञ्च, छत्र भवा महारथाः ॥ ३७ ॥

अनियुक्तोऽवदत् तात !, सर्वं स्याद् दुष्करं तदः । कातराणां न शूराणां, साहसैकावलम्बिनाम् ॥ ३८ ॥
उद्धरन्ति गिरिं चोर्वीं, लङ्घन्तेऽब्धिं तरन्ति च । तद् जगत्यस्ति नोऽसाध्यं, यत् शूराः साधयन्ति न ॥ ३९ ॥
नृपोऽवददनायासात्, कार्यं स्थैर्येण वां भवेत् । सुन्दरश्रेष्ठिवत् कोऽयं, तातेति पृष्टवान् पुनः [मुनः] ॥ ४० ॥
सोऽवग् गुणस्थले ग्रामे, श्रेष्ठ्यभूत् सुन्दराह्वयः । सुन्दरी दयिता तस्य, पुत्रो नाम्ना पुरन्दरः ॥ ४१ ॥
प्रावृडम्भःप्लुतं तस्य, गेहद्वारमपातयत् । सदाऽऽख्याति पतिं पत्नी, द्वारं वीक्ष्य निरर्गलम् ॥ ४२ ॥
कार्यमार्य ! गृहद्वारं, मा मुषित्वा व्रजेद् गृहम् । कश्चिद् रात्रौ दिवा रक्षां, करोम्येकाकिनी कथम् ॥ ४३ ॥
सोऽवक् करिष्यते लघ्वं, कोत्तालाऽस्ति ? स्थिरा भव । व्याघ्रीव कुर्कुरी द्वारे, भषन्त्यग्नि क एष्यति ? ॥ ४४ ॥
कश्चित् मुमुषिपुर्गेहं, भषन्तीमवधीत् शुनीम् । श्रेष्ठिनं सा पुनः प्राह, गेहचिन्ता हि यत् स्त्रियः (याम्) ॥ ४५ ॥
दौवारिका मृता साऽपि, कस्ते रक्षां करिष्यति ? । श्रेष्ठ्याचष्ट वधूटयस्ति, तव रक्षाविधा(सहा)यिनी ॥ ४६ ॥
वधूटयपि मृताऽन्येद्युः, सद्यो रोगाद् विधेर्वशात् । दयिता(तं) पुनराहेदं, कस्ते रक्षाकरः परः ? ॥ ४७ ॥
कथ्यं कुरु कुरु द्वारमुद्वाहय निजात्मजम् । उन्मादिष्णुः श्रियमसौ, किं न निर्नाशयिष्यति ? ॥ ४८ ॥
सुन्दरोऽथावदत् सुभ्रु !, शनैः सर्वं करिष्यते । स्यात् तुन्दपरिमृजानां, स्यात् शुभं स्थैर्यशालिनाम् ॥ ४९ ॥
नीरन्ध्रध्वान्तपूर्णायां, मध्येग्रामं परेद्यवि । रात्रौ सार्थो महानागाद्, देसरोट्टादियानवान् ॥ ५० ॥
तत्रैकाऽश्वतरी सार्थभ्रष्टा पृष्ठस्थवासना । प्रविष्टा श्रेष्ठिनो गेहमाकृष्टा तच्छुभैरिव ॥ ५१ ॥
रोडैः स्खलद्गतेस्तस्याः, पृष्ठाद् दीनारवासना । पपात तद्धणत्काराद्, जजागाराऽऽस्पदाधिपः ॥ ५२ ॥

दीपमाधाय चेक्षिष्ट, वासनानां स विंशतिम् । क्षणं प्रतीक्ष्य चोत्थाप्य, पत्नीमिदमुवाच च ॥ ५३ ॥
कार्यं स्थैर्यं प्रिये ! कार्ये, सर्वस्मिन्निति मन्मतेः । फलं पश्य ह्यनायासाल्लाभोऽभूदावयोरियान् ॥ ५४ ॥
आयान्तीं वेसरीं द्वारे, भषन्ती वारयेत् शुनी । पितृवर्गं वधूर्गत्वाऽकथयिष्यदिदं धनम् ॥ ५५ ॥
तदनेन धनेनोच्चैः, सदनं कारयिष्यते । विवाहश्चोच्चकुल्याभिः, स्त्रीभिः सह सुतस्य तु ॥ ५६ ॥
तत् पुत्र ! स्थिरता श्रेष्ठा, सर्वत्र कुरु तां ततः । उत्तालानां भवेत् पश्चात्तापोऽपि पृष्टगेहिवत् ॥ ५७ ॥
पृष्टाख्योऽभूत् कुटुम्ब्येकः, पुरा ग्रामे कुशस्थले । यक्षः ससोपवस्त्रे[वासे]ण, तेनाऽऽराद्धो धनेच्छया ॥ ५८ ॥
सोऽवग् भद्र ! त्वया ग्राह्यं, पिच्छमेकं प्रगे प्रगे । सुवर्णबर्हिणीभूय, नृत्यतः पतितं मम ॥ ५९ ॥
सदैवैवं स कुर्वाणो, धनवानचिरादभूत् । दिव्यप्रसादः स्वल्पोऽपि, निकामं कामदो नृणाम् ॥ ६० ॥
अन्येद्युश्चिन्तितं तेन, दूरे यक्षालयेऽन्वहम् । प्रातः प्रातश्च को गन्ता ?, तद् गृह्णाम्येनमक्षतम् ॥ ६१ ॥
ध्यात्वेति वाहितस्तेन, हस्तस्तद्ग्रहणेच्छया । तत्पुण्यवदगात् क्वापि, काकीभूय स केक्यपि ॥ ६२ ॥
ग्रामं ग्रामं प्रगे पृष्टः, कुटुम्बी यक्षसद्मनि । स्वभावजमपि पिच्छं, कर्हिचिन्नाप बर्हिणः ॥ ६३ ॥
नमस्याभिस्तपस्याभिर्नैरविस्याभिरन्वहम् । तेनाऽऽराद्धोऽधिकं यक्षो, नैव दर्शनमप्यदात् ॥ ६४ ॥
सन्तापभाजनं पश्चात्तापादेप ह्यजायत । दैवं हि दुर्मतिं दत्ते, चपेटां न कपोलयोः ॥ ६५ ॥
तेनाऽतिमुक्तकोत्तालो, भवन् भूमाऽनुतापवान् । तत् श्रुत्वाऽर्भोऽभ्यधात् तात !, धर्मे स्थैर्यं न युज्यते ॥ ६६ ॥
चञ्चलं पिप्पलदलमिवाऽऽयुर्मनुजन्मनाम् । तदाश्चर्यमिवाभाति, यत् सुप्त्वोत्थीयते प्रगे ॥ ६७ ॥

उदयास्तमनाक्रान्तिरप्यवस्थात्रयं रवेः । दिनान्तर्यत्र संसारे, तत्रान्येषां तु का कथा ? ॥ ६८ ॥
एवं प्रौढोचितं श्रुत्वा, बहुधाऽस्य शिशोर्वचः । श्रीमती मुदिताऽवादीत्, चिरं जीव बलिः क्रिये ॥ ६९ ॥
ततोऽतिकृच्छ्रतो मातापित्रनुज्ञामवाप्य सः । चकार सङ्घे सत्कार्चा, चैत्येष्वष्टाह्निकामहः ॥ ७० ॥
स्नातानुलिप्तसर्वाङ्गाभरणैर्भूषितो भृशम् । दधानो दण्ड-पात्रादिसाधुवेषं निजान्तिके ॥ ७१ ॥
आरुह्य शिबिकां शूरः, सहस्रनरवाहिनीम् । दानं ददानो दीनानां, जयजयारावादिनाम् ॥ ७२ ॥
धृतच्छत्रः पितृ-मातृ-भ्रातृ-मित्रपरीवृतः । उद्यद्बहुविधाऽऽतोद्यमुखरीकृतदिङ्मुखः ॥ ७३ ॥
मनो विस्मापयन्नन्यजनानां रागिणामपि । अश्रूणि पातयन्नागादतिमुक्तोऽन्तिकेऽर्हतः ॥ ७४॥ चतुर्भिः कलापकम्
प्रभुं नत्वा जयो राजा, श्रीमतीऽप्याहतुस्ततः । भगवन्नावयोः सूनोर्देहि दीक्षा—कनीं निजाम् ॥ ७५ ॥
एवं पितृभ्यां विज्ञप्तः, षड्वार्षिकमपि प्रभुः । दीक्षयामास तं योग्यं, जानन् ज्ञानेन भास्वता ॥ ७६ ॥
पितृनथावदद् वीरो, धन्या यूयं ययोः सुतः । शिवंगमी भवेऽत्रैव, बालोऽप्ययमबालधीः ॥ ७७ ॥
वैमुख्यं विषये धर्मे, सर्वस्थामोद्यमो भवे । अनास्थाऽऽसन्नभव्यस्य चिह्नमेतद् यदुच्यते ॥ ७८ ॥
परीत्तसंसृती धन्यौ, युवां याभ्यामपीदृशः । व्रताय पुत्रोऽनुज्ञातो, जीवात्मा दर्शनप्रियः ॥ ७९ ॥
कदाऽऽप्स्यावो व्रतमिति, चिन्तयन्तौ च दम्पती । जग्मतुर्गृहमेषोऽपि, विजहारार्हता समम् ॥ ८० ॥
बहिर्भुवं गतोऽन्येद्युर्वर्षाकालेऽतिमुक्तकः । बालकान् क्रीडतोऽद्राक्षीत्, निम्नभूमिस्थवारिषु ॥ ८१ ॥
शैशवे दुर्निवार्या स्यात्, क्रीडेति श्रीसुतो मुनिः । मृदा बद्धपयो बद्ध्वा, जलाश्रयमकल्पयत् ॥ ८२ ॥

क्षिप्त्वा पतद्ग्रहं तत्र, दण्डेन प्रणुदन् ब्रुवन् । ममेयं नौरहं कर्णधारश्चिक्रीड सोऽम्भसि ॥ ८३ ॥
स्थविरैर्मधुरैर्वाक्यैर्निषिद्धः क्षुल्ल ! किं त्वया । मुग्ध ! दुग्धमुखारब्धमकल्प्यमिति वादिभिः ॥ ८४ ॥
तत् श्रुत्वा सोऽधिकं ह्रीणो, जीवाजीवानभिज्ञधीः । विलक्षास्यो निवृत्तोऽस्मात्, नृणां लज्जैव भूषणम् ॥८५॥
पप्रच्छुः स्थविरा वीरं, भवैः कतिपयैर्गमी । शिवं शिशुरसौ स्वामिन् !, जलक्रीडादिलोलुपः ? ॥ ८६ ॥
प्रभुराह भवेऽत्रैव, सेत्स्यत्येष महाशयः । न कार्याऽऽयैरतो गर्हा, गर्हार्हस्यापि चाऽऽर्हतैः ॥ ८७ ॥
वैयावृत्यं व्यधुः सम्यक्, ततोऽर्हद्वचसाऽस्य ते । पात्रं प्रीणाति हि स्वान्तं, तादृशं वचसा किमु ? ॥ ८८ ॥
पपाठैकादशाङ्गानि, सोऽचिरात् स्थविरान्तिके । स्वर्णपात्रे न(ण) को भिक्षां, क्षिपेत् क्षेमाभिलाषुकः ? ॥ ८९ ॥
ज्ञात्वाऽऽयुश्चात्मनः स्वल्पं, स तेपे दुस्तपं तपः । चतुर्थषष्ठाष्टमादि द्रढीयःकर्मकर्त्तनम् ॥ ९० ॥
गुणरत्नसंवत्सराभिधं चाऽऽरब्धवांस्तपः । गीतार्थसार्थमुख्योऽर्थसाधनार्थ्यतिदुष्करम् ॥ ९१ ॥
अस्थि–चर्मावशेषाङ्गः, स उग्रतपसाऽभवत् । यथा यथा तथा भङ्गानकं मोहपुरेऽपतत् ॥ ९२ ॥
आव्रतात् सप्तवर्षान्ते, सोऽवधीत् मुनिकेसरी । चतुष्कषायकलभसुलभं मोहदन्तिनम् ॥ ९३ ॥
तज्जयात् साधुवादादिवादिनी केवलाऽबला । वरमालां गलेऽक्षैप्सीत्, श्रीनन्दनमुनेर्मुदा ॥ ९४ ॥
जैनाद्(नं) जैनं निशम्यामलवचनमलं श्रीसुतं श्रीसुतोऽहो !, बुद्ध्वा वध्वादिसङ्गानभिमुखहृदयो योऽवधीदात्मशत्रुम् ।
षष्ठेऽब्दे प्राप्य दीक्षां श्रुतमपठदथाब्दद्वयं सप्तवर्षीं तामाराध्याऽतिमुक्तस्त्रिदशसमसमायुर्गतः सिद्धिसौधम् ॥ ९५ ॥
इति श्री मुद्रित ऋषिमण्डलप्रकरणवृत्तितः उद्धृता श्री अतिमुक्तकमुनिकथा संपूर्णा

# ८० सुकोशलमुनिकथा

अथ कीर्तिधरो राजाभुक्त वैषयिकं सुखम् । सहदेव्या समं पत्न्या पौलोम्येव पुरंदरः ॥ १ ॥
प्रविव्रजिषुरन्येद्युः स मंत्रिभिरभण्यत । तवानुत्पन्नपुत्रस्य न व्रतादानमर्हति ॥ २ ॥
त्वय्यपुत्रे व्रतभाजि निर्नाथेयं वसुंधरा । तत्प्रतीक्षस्व यावत्ते स्वामिन्नुत्पद्यते सुतः ॥ ३ ॥
ततः कीर्तिधरस्यापि तथैव गृहवासिनः । काले गच्छत्यभूत्पुत्रः सहदेव्यां सुकोशलः ॥ ४ ॥
ज्ञात्वा जातमिमं बालं पतिर्मे प्रव्रजिष्यति । सहदेवीति बुद्ध्या तं जातमात्रमगोपयत् ॥ ५ ॥
विवेद मेदिनीनाथस्तं गुप्तमपि बालकम् । प्राप्तोदयं हि तरणिं तिरोधातुं क ईश्वरः ॥ ६ ॥
राजाथ स्वार्थकुशलो राज्ये न्यस्य सुकोशलम् । सूरेर्विजयसेनस्य पादान्ते व्रतमाददे ॥ ७ ॥
तप्यमानस्तपस्तीव्रं सहमानः परीषहान् । स्वगुर्वनुज्ञयैकाकिविहारेणान्यतो ययौ ॥ ८ ॥
साकेतमन्यदा मासोपवासी पारणेच्छया । स आजगाम भिक्षार्थं मध्याह्ने तत्र चाभ्रमत् ॥ ९ ॥
सौधाग्रस्था सहदेवी तं च दृष्ट्वेत्यचिंतयत् । पत्यौ प्रव्रजितेऽमुष्मिन् पतिहीना पुराभवम् ॥ १० ॥
वत्सः सुकोशलोऽप्यद्य दृष्ट्वैनं प्रव्रजेद्यदि । तदा पुत्रोऽपि मे न स्यान्निर्वीरा स्यां ततः परम् ॥ ११ ॥
तस्मान्निरपराधोऽपि भर्तापि व्रतधार्यपि । निर्वास्यो नगरात्स्वनो राज्यस्थेमचिकीर्षया ॥ १२ ॥
इत्यन्यलिंगिभिः सार्धं तं राज्ञी निरवासयत् । लोभाभिभूतमनसां विवेकः स्यात्कियच्चिरम् ॥ १३ ॥

धात्री सुकोशलस्याथ स्वामिनं व्रतधारिणम् । पुरान्निर्वासितं ज्ञात्वा रोदिति स्म निरर्गलम् ॥ १४ ॥
किं रोदिषीति पप्रच्छ सुकोशलनृपोऽपि ताम् । कथयामास साप्येवमक्षरैः शोकगद्गदैः ॥ १५ ॥
राज्ये त्वां बालकं न्यस्य तव कीर्तिधरः पिता । प्राव्राजीत् सोऽद्य भिक्षार्थं प्राविक्षदिह पत्तने ॥ १६ ॥
तद्दर्शनात्त्वत्राप्यद्य व्रतग्रहणशंकया । निर्वासितः स ते मात्रा, दुःखेनानेन रोदिमि ॥ १७ ॥
सुकोशलोऽपि तच्छ्रुत्वा गत्वा च पितुरंतिके । बद्धांजलिर्विरक्तात्मा तस्माद्व्रतमयाचत ॥ १८ ॥
चित्रमाला च तत्पत्नी गुर्व्येत्य सह मंत्रिभिः । उवाचास्वामिकं स्वामिन्न राज्यं त्यक्तुमर्हसि ॥ १९ ॥
राजाप्यवोचद्गर्भस्थोऽपि हि सूनुर्भया तव । राज्येऽभिषिक्तो भाविन्यप्युपचारो हि भूतवत् ॥ २० ॥
इत्युक्त्वा सकलं लोकं संभाष्य पितुरंतिके । सुकोशलः प्रवव्राज तपस्तेपे च दुस्तपम् ॥ २१ ॥
निर्ममौ निष्कषायौ तौ पितापुत्रौ महामुनी । विजह्रतुर्युतावेन पावयंतौ महीतलम् ॥ २२ ॥
तनयस्य वियोगेन खेदभाक् सहदेव्यपि । आर्तध्यानपरा मृत्वा व्याघ्र्यभूद्गिरिगह्वरे ॥ २३ ॥
इतश्च तौ कीर्तिधरसुकोशलमहामुनी । प्रावृट्कालचतुर्मासीमत्येतुं दांतमानसौ ॥ २४ ॥
निःस्पृहौ स्वशरीरेऽपि स्वाध्यायध्यानतत्परौ । गिरेर्गुहायामेकस्य तस्थतुः सुस्थिताकृती ॥ २५ ॥
संप्राप्ते कार्तिके मासि प्रयांतौ पारणाय तौ । दृष्टौ मार्गे तया व्याघ्र्या यमदूत्येव दुष्टया ॥ २६ ॥
सा व्याघ्री शीघ्रमभितो दधावे स्फारितानना । दूरादभ्यागमस्तुल्यो दुर्हृदां सुहृदामपि ॥ २७ ॥
आपतंत्यामपि व्याघ्र्यां तौ क्षमाश्रमणोत्तमौ । धर्मध्यानं प्रपेदानौ कायोत्सर्गेण तस्थतुः ॥ २८ ॥

सा तु व्याघ्री विद्युदिव पपातादौ सुकोशले । दूरापातप्रहारेण पृथ्व्यां च तमपातयत् ॥ २९ ॥
चटच्चटिति तच्चर्म दारं दारं नखांकुशैः । पापा सापादतृप्ताश्रं वारीव मरुपांथिका ॥ ३० ॥
त्रोटयित्वा त्रोटयित्वा त्रटत्त्रटिति सा रदैः । जग्रसे मांसमपि हि वालुंकमिव रंकिका ॥ ३१ ॥
दंतयंत्रातिथीचक्रे कर्कशा कीकसान्यपि । कटत्कटिति कुर्वन्ती सेक्षूनिव मतंगजी ॥ ३२ ॥
कर्मक्षयसहायेयमिति मम्लौ मुनिर्न सः । विशेषतस्त्वभूदुच्चावचरोमांचकंचुकः ॥ ३३ ॥
व्याघ्र्यैवं खाद्यमानोऽपि शुक्लध्यानमुपेयिवान् । तत्कालोत्केवलो मोक्षं सुकोशलमुनिर्ययौ ॥ ३४ ॥
मुनिः कीर्तिधरः सोऽपि समुत्पादितकेवलः । क्रमादासादयामास सुखाद्वैतास्पदं पदम् ॥ ३५ ॥

इति श्रीमुद्रित त्रिषष्ठि शलाका पुरुषचरित्र—सप्तमपर्वादुद्धृता श्री सुकोशलमुनिकथा संपूर्णा.

## ८१ श्री सुदर्शनश्रेष्ठिकथा

अस्त्यङ्गविषये चम्पापुर्यां श्रीदधिवाहनः । पार्थिवस्तत्प्रिया रूपपात्रमत्राऽभयाह्वया ॥ १ ॥
तत्राजनिष्ट धर्मिष्ठः श्रेष्ठी श्रेष्ठजनेष्टकृत् । श्रीमानृषभदासाख्योऽर्हद्दासी तत्प्रिया प्रिया ॥ २ ॥
तयोरेकोऽस्ति महिषीपालकः सुभगाह्वयः । स चारयति भद्रात्मा, महिषीः शाड्वलावनौ ॥ ३ ॥
हिमर्त्तौ सोऽन्यदा सायमागच्छन् सदनं प्रति । कायोत्सर्गस्थमद्राक्षीत्, मुनिं मार्गे निरम्बरम् ॥ ४ ॥
स्फीते शीते पतत्येष, हा ! निरावरणः कथम् ? । मुनिर्भावीति चिन्ताऽऽर्त्तः, कथञ्चिदनयत् निशाम् ? ॥५॥

महिषीर्महिषीपालः, पुरस्कृत्याऽऽत्मनः अगे । सवे[चे]लमचलत् साधुमपश्यच्च तथास्थितम् ॥ ६ ॥
नत्वाऽऽसांनक्रिवान् स्तोकं, सुभगो मुनिसन्निधौ । उदियाय रविस्तावद्, द्वेधाऽप्यस्य तमोऽपहः ॥ ७ ॥
मुनीन्द्रो द्राग् नमो अर(रि)हंताणमित्युदीर्य सः । व्योमोत्पपात पक्षीव, शुश्राव सुभगोऽप्यदः ॥ ८ ॥
इयं खगामिनी विद्या, जानन्निति स सन्मतिः । जजाप तत्पदं तिष्ठन्, स्वपन् जाग्रद् गृहे बहिः ॥ ९ ॥
श्रेष्ठिश्रेष्ठोऽन्यदाऽपृच्छत्, क्वाप्तं पदमिदं त्वया ? । सोऽवक् खगामिनी विद्या, मयाऽऽसर्पि(र्षे)मुखात् सुखाव् ॥१०॥
न व्योमगामिनी विद्या, केवलं भद्र ! किं त्वियम् । स्वर्गापवर्गयोर्योगदात्री पात्री यथाऽन्धसाम् ॥११॥
तेनोच्छिष्टेन नो जप्याऽऽछुप्त्या यान्त्यधिदेवताः । इत्युक्त्वाऽपाठयत् श्रेष्ठी, सर्वां तस्मै नमस्कृतिम् ॥ १२ ॥
धरां धराधरे धाराधोरणीभिर्निरन्तरम् । पूरयत्यथ महिषीर्नीत्वाऽगात् सुभगो बहिः ॥ १३ ॥
तदाऽविशन् महिष्योऽन्यक्षेत्रे तीर्त्वा नदीं द्रुतम् । सोऽचिन्तयदुपालम्भो, माऽऽयासीत् स्वामिनो मम ॥ १४ ॥
ततः खगामिनीविद्यां, बुद्ध्वा ध्यात्वा नमस्कृतिम् । झम्पामदादसौ नद्यां, स्थाणुविद्धो मृतो हृदि ॥ १५ ॥
नमस्कृतिस्मृतिवशात्, मराल इव मानसे । सुस्वमसूचितः कुक्षौ, सोऽर्हद्दास्या अवातरत् ॥ १६ ॥
पुण्यानपुरयत् श्रेष्ठी, तृतीये मासि दोहदान् । कालेऽम्बा सुषुवे सूनुं, नाम्नाऽऽकृत्या सुदर्शनम् ॥ १७ ॥
वर्द्धमानः कलाशालीन्दुलेखेव सुदर्शनः । केषां चेतश्चकोराणां, न ऊहाराक्षिगोचरः ? ॥१८ ॥
द्विधा मनोरमां कन्यां, पितृभ्यां परिणायितः । एतयेवेन्द्र इन्द्राण्या, स भोगान् बुभुजे समम् ॥ १९ ॥
कपिलेन समं प्रीतिरभूत् तस्य पुरोधसा । सद्गोष्ठीनिष्ठयोरिष्टः, कालो याति तयोर्द्वयोः ॥ २० ॥

एकान्तेऽपृच्छदन्येद्युः, कपिलं कपिला प्रिया । प्रियाद्यकल्ये क्व यासि, त्यक्त्वा कार्याणि वेश्मनः ? ॥ २१ ॥
सोऽवक् सुहृद्गोष्ठीनिष्ठो, नान्यत् कार्यं स्मराम्ययि ! । साऽपृच्छत् को वयस्यस्ते ? स्मित्वा स्माह पुरोहितः ॥२२॥
पुण्य-नैपुण्य-लावण्य-सौजन्यादिगुणोत्क(-णाक)रः । किमद्यापि न मन्मित्रम्, श्रुतः श्रुत्या सुदर्शनः ॥ २३ ॥
विशदैस्तद्गुणैश्चित्रं, कपिला रक्ततामगात् । तदाप्त्युपायं ध्यायन्ती, मन्मथोन्मथिता स्थिता ॥ २४ ॥
गूढकार्येऽन्यदा राज्ञा, प्रेषितः कपिलः क्वचित् । कपिलाऽवसरं ज्ञात्वा, श्रेष्ठयोकोऽगादुवाच च ॥ २५ ॥
निर्दिग्धं बाधया स्निग्धं, श्रेष्ठिन् ! स्वदृष्टिवृष्टितः । शीघ्रमाश्वासयाभ्येत्य, दग्धं द्रुममिवाम्बुदः ॥ २६ ॥
सद्यस्तदास्पदं गत्वा, श्रेष्ठयाचष्ट स मे सुहृत् । क्वास्तीति ? कपिलाऽवोचत्, निर्वातेऽस्ति(च)सुहृत् तव ॥ २७ ॥
इत्युक्त्वाऽसौ प्रमादीव, निगोदे सदनान्तरे । नीतस्तयाऽथ झटिति, जटितः (दत्तः) कपाटसम्पुटः ॥ २८ ॥
नीवीबन्धश्लथा मुक्तकञ्चुका सा सुदर्शनम् । कामुका कामयामास, निकामं कामविह्वला ॥ २९ ॥
प्रत्युत्पन्नमतिः श्रेष्ठी, स्माह यूनां मनोमतम् । इदमेव परं मुग्धे !, क्लैब्ये(क्लीबो) नाऽस्मि विडम्बितः [-म्बनम्] ॥
विलक्षा गच्छ गच्छेति वादिनी कपिला द्रुतम् । द्वारमुद्घाटयामास, निराशास्याऽऽशया सह ॥ ३१ ॥
भिन्नग्रन्थिरिव जीवो, निर्गत्याऽऽस्पदतस्ततः । न गन्तव्यं मयाऽन्येषां, जग्राहाभिग्रहं गृहे ॥ ३२ ॥
ययौ क्रीडितुमन्येद्युरुद्याने दधिवाहनः । सुदर्शन-पुरोधोभ्यां, समं सामन्त-मन्त्रिभिः ॥ ३३ ॥
यानारूढाऽभया राज्ञी, दधिवाहनमन्वगात् । इन्द्राणीव सुरेन्द्रं द्राक्, सख्या कपिलया समम् ॥ ३४ ॥
षड्रसैरिव षट्पुत्रैर्युता याता मनोरमा । तां वीक्ष्य कपिलाऽपृच्छद्, राज्ञीं केयं पुराऽङ्गना ? ॥ ३५ ॥

राज्याह सखि ! किं वेत्सि, नेमां सुदर्शनप्रियाम् ? । साऽऽहेक्षोः फलवत् तर्हि, कुतोऽस्याः सुतसम्भवः ॥३६ ॥
राज्यवोचदसम्बद्धं, जल्पाके ! जल्पसीह किम् ? । तुल्यं हि राज्ञां(ज)रङ्काणां, लक्षणं पुत्रलक्षणम् ॥ ३७ ॥
साऽऽहायं देवि ! पण्ढोऽस्ति, स्मित्वा स्माह नृपप्रिया । धूर्त्ते ! धृष्टाऽसि किं क्वाप्यार्हतेन श्रेष्ठिनाऽमुना ? ॥३८॥
उवाच वञ्चनां प्राच्यां, स्वस्य राज्यै द्विजाङ्गना । राज्यूचेऽयं परस्त्रीषु पण्ढो न त्वात्मनः स्त्रियाम् ॥ ३९ ॥
हुं मुग्धे ! वञ्चिताऽसीति, हसन्त्याह नृपप्रिया । ततो मन्दाक्षवैलक्ष्यादाख्यदेवं द्विजाङ्गना ॥ ४० ॥
वञ्चिता सत्यमस्म्यस्मि, मुधा तेऽपि विदग्धता । साम्प्रतं ज्ञास्यते लग्नं, चेत् समं रमसेऽमुना ॥ ४१ ॥
सगर्वमभयाऽवादीत्, मुधा[ग्धे]! वार्त्ता ह्यमुष्य का ? । भूपोऽपि भ्रूलतोत्क्षेपमात्रेण भ्राम्यते मया ॥४२॥
स्त्रीणां कटाक्षविक्षेपात्, पुष्यन्त्येकेन्द्रिया अपि । पश्चाक्षस्य मनुष्यस्याऽमुष्य क्षोभे कियान् श्रमः ॥ ४३ ॥
हले ! सहेलं यद्येनं, न रमेऽग्नौ विशामि तत् । इत्युक्त्वा ते वनं गत्वा, सायं स्वगृहमीयतुः ॥ ४४ ॥
प्रतिज्ञां पण्डिताख्याया, धात्र्यारतामभयाऽवदत् । धात्र्याह पुत्रि ! तत्सङ्गसङ्गरः सुकरो न ते ॥ ४५ ॥
सामान्योऽप्यास्तिकः स्त्रीभिरक्षोभ्योऽर्हन्मतानुगः । धर्मध्यानैकतानस्य, सुदर्शनस्य का कथा ? ॥ ४६ ॥
शेषाहेर्यः शिरोरत्नमुद्धरेत् सिंहकेसरान् । ध्रुवचक्रं चालयेत[-क्रचालने] शक्तः, स तु तच्छीलचालने ॥ ४७ ॥
कथमायात्यसावत्रायातोऽपि रमते कथम् । त्वया परस्त्रिया सार्द्धं ?, साधु तन्न कृतं सुते ! ॥ ४८ ॥
साऽऽहेदं तु कृतं किन्तु दर्शयोपायमम्ब ! मे । धात्र्याह निश्चयस्ते चेदुपायोऽस्त्येक एव हि ॥ ४९ ॥
शून्यागारे स पर्वाहे, कायोत्सर्गेण तिष्ठति । मूर्त्तो योग इवानेयोऽत्रापरोऽवसरोऽपि न ॥ ५० ॥

इतश्च कौमुदीपर्वदिने राजाज्ञया प्रजाः । क्रीडार्थं जग्मुरुद्याने, पटहोद्घोषबोधिताः ॥ ५१ ॥
श्रीमान् सुदर्शनः श्रेष्ठी, च(चा)तुर्मास(सि)कपर्वणि । तस्थौ विज्ञप्य राजानं, तदा धर्मचिकीर्गृहे ॥ ५२ ॥
अभयां पण्डिताऽवोचदद्य स्थेयं त्वया गृहे । प्रतिज्ञापूरणकृते, कृत्वा किञ्चित् मृषोत्तरम् ॥ ५३ ॥
भृशं शिरोऽर्तिरस्तीति, दम्भेनाऽऽपृच्छ्य सा नृपम् । तस्थावन्तः–पुरान्तःस्था, कपटोत्कटपाटवा ॥ ५४ ॥
स्नात्रार्चादिविधीनह्नि, विधाय विधिनाऽर्हताम् । प्रगृह्य पौषधं श्रेष्ठी, तस्थौ प्रतिमया निशि ॥ ५५ ॥
पण्डिता यानमारोप्याऽभयायै तं तथास्थितम् । यक्षाकृतिरिति द्वाःस्थैरनिरुद्धाऽऽर्पयत् मुदा ॥ ५६ ॥
भ्रूलतोत्क्षेपकोदण्डा कटाक्षोन्मुक्तसायका । श्रेष्ठिनं सा व्यधाद् वेध्यं, शृङ्गारैकतरङ्गिणी ॥ ५७ ॥
हुं तपो दुस्तपं तप्तं, मुग्धाद्य फलितं तव । भजस्व मुञ्च पाखण्डं, मां रूपेणाप्सरःसमाम् ॥ ५८ ॥
स्तनोपपीडमाश्लेषो, हावभावादिकाः क्रियाः । प्रहारा इव वज्राद्रौ, सर्वास्तस्मिन् मुधाऽभवन् ॥ ५९ ॥
स विशेषाद् दधौ ध्यानं, जग्राहेदं त्वभिग्रहम् । पारयामि तदोत्सर्गं, मुच्ये चेत् सङ्कटादतः ॥ ६० ॥
नर्मभिः कर्मभिर्ध्यानवर्मभृद् बहुधाऽप्यसौ । तयोपसर्गितो वात्यया मेरुरिव नाक्षुभत् ॥ ६१ ॥
विलक्षीभूय दक्षास्या, श्रेष्ठिनं सा ततोऽब्रवीत् । स्त्रियो मुग्ध ! सुधास्तुष्टा, रुष्टा हि विषमं विषम् ॥ ६२ ॥
क्षुभ्येत् न यावदातङ्कोक्तिभिर्नो भक्तिभ(यु)क्तिभिः । तावत् नखैर्विदार्य स्वं, पूच्चकाराऽभया प्रगे ॥ ६३ ॥
रे रे प्राहरिकास्तूर्णमेत्य पश्यन्तु मद्वपुः । शीललोपमनिच्छन्त्याः, पाप्मना कीदृशं कृतम् ? ॥ ६४ ॥
दधाविरे प्राहरिका, धृतनानाविधायुधाः । ददृशुः श्रेष्ठिनं, शान्तं, कायोत्सर्गस्थितं पुरः ॥ ६५ ॥

नैव सम्भवति ह्यस्मिन्निन्दावग्नेरिवोद्गमः । इति सञ्चिन्त्य तैर्भूपो, विज्ञप्तः स्वयमागमत् ॥ ६६ ॥
राज्ञे न्यजिज्ञपद् राज्ञी, सबाष्पं गद्गदस्वरम् । देवाहं भवदादेशादावासे यावदागता ॥ ६७ ॥
तावदकाण्डकूष्माण्डोद्भेदभेदमिवाग्रतः । अदर्शमेनं गोवक्त्रं, व्याघ्रं कपटधार्मिकम् ॥ ६८ ॥
कुर्वन् मच्छीललोपार्थं, लक्षि निर्लोठितः स तु । पापो विदारयामास, मां रुपा नखरैः खरैः ॥ ६९ ॥
असम्भाव्यमिदं ह्यस्मिन्, दुग्धे पूतरका इव । विचिन्त्येति नृपोऽपृच्छत्, श्रेष्ठिन् ! ब्रूहि यथास्थितम् ॥ ७० ॥
प्रतिमास्थो न चोवाच, सत्यं श्रेष्ठ्यभयाभयात । राज्ञा ज्ञातं ततो जार–चो[चौ]राणां लक्षणं ह्यदः ॥ ७१ ॥
क्रुधाऽऽदिदेश देवोऽथाऽऽरक्षकांस्तद्वधक्रमे । ततस्ते श्रेष्ठिनो भद्रं, कारयाञ्चक्रिरे शिरः ॥ ७२ ॥
मषीलिप्तमुखं बद्धकरवीरस्रजं गले । शूर्पछत्रं खरारूढं, पुरोवादितडिण्डिमम् ॥ ७३ ॥
उद्गिरन्तो मुखे जारदोषं तस्य न चेशितुः । निन्युरारक्षकास्तस्य, सद्माभ्यर्णं सुदर्शनम् ॥ ७४ ॥
सतीमतल्लिका वीक्ष्यासम्बद्धं तत् मनोरमा । दध्यौ कदाचिदम्भोधिः, सीमां मुञ्चेर् न मत्पतिः ॥ ७५ ॥
जिनेन्द्रं मनसि कृत्वोद्दिश्य शासनदेवताम् । तस्थौ प्रतिमया गर्भागारमेत्य मनोरमा ॥ ७६ ॥
उत्पातशान्तिर्मे पत्युर्भविष्यति यदा तदा । उत्सर्गं पारयिष्यामि, नान्यथेत्यस्त्वभिग्रहः ॥ ७७ ॥
अत्रान्तरेऽभवद् व्योम्नि, दिव्या वाणी मनोरमे ! । सान्निध्यं ते विधास्यामः, पत्युस्त्वं माऽधृतिं कृथाः ॥७८॥
इतश्चारक्षका निन्युर्बहिर्भूमौ सुदर्शनम् । शूलिकायां न्यधुश्चोग्रा, हाहारवपरे जने ॥ ७९ ॥
जज्ञे दिव्यानुभावेन, शूलिका सिंहविष्टरम् । खड्गप्रहारा हाराश्च, बभूवुः श्रेष्ठिनो गले ॥ ८० ॥

केयूराण्यभवन् बाह्वोः, पादयोनूपुरान् पुनः । ग्रीवायां ग्रीवाभरणं, शस्त्रघाताश्च तत्तनौ ॥ ८१ ॥
ततस्तदद्भुतं राज्ञे, विज्ञसमधिकारिभिः । सतन्त्रो विस्मयस्मेरस्तत्रागात् पार्थिवः स्वयम् ॥ ८२ ॥
दिव्यसिंहासनासीनं, नानालङ्कृत्यलङ्कृतम् । कल्पवृक्षमिवैक्षिष्ट, साक्षाद् भूपः सुदर्शनम् ॥ ८३ ॥
ततः सर्वाङ्गमालिङ्ग्य, सानुतापं वहन् मनः । ऊचे पुण्यात्मनैकेन, मत्पुरं शोभतेऽधिकम् ॥ ८४ ॥
हा ! धिग् विचारशून्यस्याज्ञस्याऽज्ञानं ममेदृशम् । स्त्रीणां वचसि विश्वासो यः कुर्यात् स करोतु हा ! ॥८५॥
दिष्ट्या स्वदृष्ट्या दृष्टोऽसि, श्रेष्ठिन् ! जीवन् स्वकर्मभिः । इत्याद्युक्त्वाऽवदद् भूपः, क्षमस्वाऽऽगो महाशय ! ॥८६॥
पट्टेभस्कन्धमारोप्य, ततो राजा सुदर्शनम् । उद्यज्जयजयारावमानयद् राजमन्दिरम् ॥ ८७ ॥
जनस्तां वर्द्धयामास, हर्षोत्कर्षात् मनोरमाम् । धार्मिके ! पार्योत्सर्गं, क्षेमेणाऽऽगात् पतिस्तव ॥ ८८ ॥
निर्बन्धेन नृपपृष्टः, श्रेष्ठी तथ्यमचीकथत् । सोऽवगचीकरः सर्वं, तद्वैवमश्रुवंस्तदा ॥ ८९ ॥
अभयानिग्रहे क्रुद्धं, श्रेष्ठी विज्ञप्य पार्थिवम् । अभयं दापयामास, पीडितोऽपीक्षुरु (स)द्रसः ॥ ९० ॥
सत्कृत्य दिव्यवस्त्राद्यैर्बहुमानपुरस्सरम् । प्राहिणोद् गजमारोप्य, पार्थिवः श्रेष्ठिनं गृहे ॥ ९१ ॥
जिनधर्मानुभावं तद्, वीक्ष्य साक्षात् क्ष्मापतिः । पिपासुरिव पीयूषेऽर्हद्धर्मे प्रेमवानभूत् ॥ ९२ ॥
स्वभयादभया राज्ञी, स्वमुद्बन्ध्य व्यपद्यत । परस्मिंश्चिन्तितं पापं, प्रायः पतति चाऽऽत्मनि ॥ ९३ ॥
कारागारादिवासारात्, संसारात् श्रीसुदर्शनः । विरक्तात्मा परिव्रज्यामुपादत्तैकचित्ततः ॥ ९४ ॥
पण्डिता पाटलीपुत्रे, देवदत्तान्तिके गता । तत्पुरो वर्णयत्यस्य, शीलदार्ढ्यं मुनेर्भृशम् ॥ ९५ ॥

सामर्षं गणिकाऽप्याख्यत्, किं वर्णयसि तं भृशम् ? । अङ्गुल्या नर्त्तयाम्यग्रे, यदि पश्यामि तं क्वचित् ॥ ९६ ॥
भ्रमन् गोचरचर्यायां, दैवात् तत्रागतो मुनिः । कपटश्रावकीभूय, नीतः पण्डितया गृहे ॥ ९७ ॥
बहुधा द्वारमुन्मुद्र्याभ्यर्थितो देवदत्तया । मुनिर्न शीलमर्यादां, वात्ययाऽब्धिरिवामुचत् ॥ ९८ ॥
ततो जातातिनिर्वेदो, मुनिर्निर्गत्य तद्गृहात् । श्मशाने प्रतिमया तस्थौ, कर्मनिर्मूलनैकधीः ॥ ९९ ॥
व्यन्तरीभूतया तत्राऽभययाऽत्युपसर्गितः । सुदर्शनमुनिर्ध्यानातिरेकात् प्राप केवलम् ॥ १०० ॥
सुरैर्निर्मितमध्यास्य, सुवर्णकमलं मुनिः । मोहनिद्रापहां चक्रे, सुधादेश्यां स देशनाम् ॥ १०१ ॥
केचित् यतित्वं केचिच्च, श्रावकत्वं, प्रपेदिरे । प्रबुद्धा चाभया देवदत्ता धात्र्यपि पण्डिता ॥ १०२ ॥

भव्यारविन्दवदनानि विकाश्य तेजोराशिः सुदर्शनमुनिः स्वपदप्रचारैः ।
कर्मास्तिभूधरमपास्य निरस्तशोकलोकाग्रमस्तकमणिश्रियमाससाद ॥ १०३ ॥

इति श्री मुद्रित--ऋषिमण्डलप्रकरणवृत्तित उद्धृता श्री सुदर्शनश्रेष्ठीकथा संपूर्णा.

## जैनकथार्णवः समाप्तः